CLOSING: द्वाविंशतिसहस्राणि अष्टसप्ततितमे ब्राह्मणस्य च धर्मेण त्वया वै रक्षित इत्यतः पूर्वं त्रयोविंशतिसहस्राणि ततः प्रबन्धः समाप्त्या चतुर्विंशतिसहस्राणीत्याहुः ॥ २ ॥

## 799. सुन्दरमणिसन्दर्भः

OPENING: श्रीसहजावल्लभो जयतेतराम्

इह खलु सकलजीवजीवातुचरितस्य विशिष्य प्रपन्नभक्तजनोज्जीवनाय परमपदावतीर्णस्य भगवतोऽथ श्रीरामचन्द्रस्य सदुपास्यत्वं चिन्त्यते । तच्च—

सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ।
निवासः सर्वसाधूनां प्रपन्नानां परा गतिः ॥ १ ॥
आर्त्तानां संश्रयश्चैव गुणानामेकभाजनम् ।
रक्षिता स्वस्य वंशस्य स्वजनस्य च रक्षिता ॥ २ ॥

CLOSING: सुन्दरो राम एवैको गुणै रूपेण धामतः ।
धाम्ना च परिवारेण लीलया चरितेन च ॥ १ ॥
उक्तश्च सीतयाप्येवं कविना मुनिनादिना ।
सुन्दराणां मणिर्यस्माद् रामोऽयं नरचन्द्रमाः ॥ २ ॥
गुणज्ञै रुच्यते भद्रो यः सुन्दरशिरोमणिः ।
सन्दर्भोप्येष तन्नाम्ना स्यात् सुन्दरशिरोमणिः ॥ ३ ॥
सर्वत्र स्खलितं स्वत्र क्षन्तुमर्हंति कोविदाः ।
स्निग्धे च पिच्छिले वक्रे नटोऽपि स्खलितो भवेत् ॥ ४ ॥
स्निग्धोऽथ पिच्छिलो रामो वक्रो गम्भीर उन्नतः ।
दुर्गमोऽपि कृपावश्यः सुखाराध्यस्ततो नृणाम् ॥ ५ ॥
लोकनाथ दयाम्भोधे गुणभुग्गुणिनायक ।
क्षमस्व जानकीभर्त्त रागोकारि मयेदृशम् ॥ ६ ॥
सुन्दरमणिरप्येष सतां कण्ठगतस्त्वलम् ।
प्रकाशं प्राप्य सर्वत्र सौभाग्यं ज्ञापयिष्यति ॥ ७ ॥
मधुराचार्यनाम्नैव गालवाश्रमवासिना ।
सुन्दराभिधसन्दर्भो भावशोधाय निर्मितः ॥ ८ ॥
सुखैश्वर्यरसज्ञत्वादनेन भगवान्मम ।
प्रीयतां जानकीजानी रामो रमयतां वरः ॥ ९ ॥
काव्यानां च रसानां च विद्यानां तपसामपि ।
आद्याय गुरवे भूम्ने वाल्मीकिमुनये नमः ॥ १० ॥

COLOPHON: इति श्रीश्रीमन्मधुराचार्यविरचितं सुन्दरमणिर्नाम सन्दर्भः ।

Post-Colophonic: संवत् १७७९ प्र० श्रावण वदी १२ शुक्रे लिखितमिदं शुभं भवतु लेखकपाठकयोः श्रीमन्मधुराचार्यपरमगुरवे नमो नमः ।

## 845. महाभारतम् (सभापर्व) भावदीपटीकासहितम्

श्री गणेशाय नमः ।

Ct. OPENING :

बीजाङ्कुरद्रुमसमेश्वरसूत्रविश्वान्
मोक्षाय चिन्तयत यूयमभेदबुद्धया ।
दास्याय बीजशतगर्भफलाभमेकं
गोपालमेव कलयाम जगन्निदानम् ।। १ ।।

जीवे भुजि: स्वपरसृष्टवपुर्यु जेव
पत्रे शतापरधिया निजमायया वा ।
सृष्टैरुपाधिभिरसङ्कुचितावपिष्टा
तस्मिन्ममास्तु रतिरात्मनि लक्षणार्थे ।। २ ।।

प्रणम्य नारायणतीर्थवर्यान् श्रीरेशमिश्रांश्च हमीरधुर्यान् ।
प्राचां गुरूणां हृदयानुरूपं कुर्मः सभापर्वणि भावदीपम् ।। ३ ।।

Ct. CLOSING : & Colophone

इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरन्धरचतुर्धरवंशावतंसश्रीगोविन्दसूरिसूनु-श्री-नीलकण्ठविरचिते भारतभावदीपे सभापर्वार्थप्रकाश: समाप्तिमगमत् ।

अत्र वृत्तान्ताः—मयाभिगमनं, सभानिर्माणं, सभाप्रवेशः, नारदागमनं, कच्चित्प्रश्नः, देवसभावर्णनम्, राजसूयमन्त्रः, जरासन्धोत्पत्तिः, जरासन्धवधः, राजमोक्षणं, दिग्विजयः, राजसूयः, राज्ञामागमनं, बल्याहरणं, राज्ञां नियोगः, अर्घाभिहरणं, शिशुपालकोपः, शिशुपालवधः, यज्ञसमाप्तिः, वासुदेवगमन, दुर्योधननिवासः, सभायां दुर्योधनावहासः, दुर्योधनामर्षः, दुर्योधनचिन्ता, धृतराष्ट्रमन्त्रः, पाण्डवपराजयः, द्यूतं, राज्यहरणं, द्रौपदीप्रकर्षणं, द्रौपदीवरप्रदानं, अनुद्यूतं, पाण्डवपराजयः, वनप्रस्थानमिति द्वितीयं सभापर्व समाप्तम् ।

## 908. भगवद्गीता सटीका

Ct. OPENING : (f. 2)

× × × × × अवलोक्य दुर्योधनो द्रोणं प्रति यद्वचः अवोचत्, तदेव नवभिः श्लोकैः सञ्जयः धृतराष्ट्रं प्रत्याह—

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ।। ३ ।।

हे आचार्य ! एतां पाण्डुपुत्राणां महतीं सप्ताक्षौहिणीपरिमितां चमूं सेनां पश्य अवलोकय । कथम्भूतां तव शिष्येण द्रुपदपुत्रेण दृष्टद्युम्नेन धीमता तव शिष्यत्वेन सेनव्यूहविन्यासादि बुद्धिमता व्यूढां व्यूहविन्यासेत(न) स्थापिताम् । तव शिष्येणेति तथापि पाण्डवसेनायां कश्चिदनुरागो नास्तीति कौटिल्यवचनं दुर्योधनस्येति । तत्पुत्राः···रपुत्राः इति साभिप्रायं वचनं दुर्योधनस्य ।

COLOPHONE:

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे महाभारते सन्न्यासयोगो नामाष्टादशोऽध्यायः सटीकः समाप्तः ।

Post Colophonic संवत् १५१८ वर्षे आश्विनशुक्ले पौर्णमास्यां गुरौ इलदुर्गे महाराजश्रीभानौ या० प्रजापतिसुतेन या० देवेनेदं लिखितम् ।

## 937. पाण्डवगीता सटीका

OPENING : श्रीराधाकृष्णाय नमः ।

पाण्डव उवाच—

प्रह्लादनारदपराशु(श)रपुण्डरीकव्यासाम्बरीकशुकशौनकभीष्मकाद्याः ।
रुक्मांगदार्जुनवशिष्ठविभीषणाद्या एतानहं परमभागवतान्नमामि ॥ १ ॥

Ct. अर्थ—पाण्डव कहत भये । प्रह्लाद नारद परासर पुंडरीक व्यास अम्बरि सुकदेव शौनक भीष्म इनकुं आदि दे, रुक्मांगद अर्जुन[व]सिष्ठ विभीषण इनकुं आदि दे, इतने परम भगवान के भक्त कुं नमस्कार करव हूं ॥ १ ॥

COLOPHON : सौनक उवाच—

भोजने छादने चिन्ता वृथा कुर्वन्ति वैष्णवाः ।
योसौ विश्वंभरो देवः स भक्ता (क्तः) किं नु पेक्ष्यते ॥ ८३ ॥

अर्थ—सोनक कहत भये । विष्णुभक्त जो पुरुष उवे अन्न वस्त्र की चिन्ता व्यथ करत हे, जिनके विश्वम्भर नाम कहियें संसार को पालें एसो जे देव भगवान उवे अपनें देगें ॥ ८३ ॥

COLOPHON : इति श्रीपाण्डवगीता हरिवंशकृत टीका भाषा सम्पूर्णम् । ८५६ ।

Post-Colophonic : लखितं कोटामध्ये महंत श्रीश्रीश्रीमगन मसतानजी का अस्तान मे । श्रीराम ।

## 942. रामगीता सटीका

OPENING : ॐ परमात्मने नमः ।

अथ भगवान् शिवो रामलक्ष्मणसम्वादमुखेन परतत्त्वमुपदिष्टमाह ततो इति ।

ततो जगन्मङ्गलमङ्गलात्मना विधाय रामायणकीर्त्तिमुत्तमाम् ।
चचार पूर्वाचरितं रघूत्तमो राजर्षिवर्यैरपि सेवितं यथा ॥ १ ॥

जगतां यानि मङ्गलानि आनन्दास्तेषामुपजीव्यभूतं मंगलं ब्रह्मानन्दः स एव आत्मा स्वरूपं तेन एतस्यैव आनन्दस्याग्निभूतानि मात्रामुपजीवन्तीति श्रुतेः । मङ्गलानां च मङ्गलं इति स्मृते श्च । × × × × ×

किन्त्वन्यैरपि राजर्षिश्रेष्ठैर्यथाभिसेवितं तथा चचार कृतवान् ॥ १ ॥

CLOSING : & COLOPHON : इति श्रीमदध्यात्मरामायणे उमामहेश्वरसम्वादे श्रीरामगीता नाम पञ्चमः सर्गः ॥ ५ ॥

इति श्रीमत्सकलराजविपदुद्धरणसमर्थस्यादिविरुदावली विराजमानस्य हिम्मतिवर्मणः पुत्रस्य श्रीरामवर्मणः कृतावध्यात्मरामायणे सेतौ उत्तरकाण्डे श्रीरामगीताटीकायां पञ्चमसर्गः ।

## 947. रामगीता 'पदबोधिनी' टीकासहिता

Ct. OPENING :
(f. 2)

लक्ष्म्यंकयज्ञसूत्रायामुरस्कं नौमि शोभितम् ।
कपाटवस्तुविस्तीर्णमुन्नतं शार्ङ्गधन्वनः ॥ १२ ॥
× × ×
सरसार्थपदासक्तां तनोमि पदबोधिनीम् ।
नि(वि)वृत्ति रामगीताया बालव्युत्पत्तिसिद्धये ॥ २५ ॥
यदपि चित्रपदादि[वि]वर्जिता तदपि रामकुमारकृतिस्त्वियम् ।
सुखसुबोधवती पदबोधिनी भवतु बालसुखाय विलोकिता ॥ २६ ॥
श्रीरामलक्ष्मणसंवादप्रसङ्गेन शिवः स्वयम् ।
परतत्त्वं प्रियां प्राह भगवान् परतत्त्ववित् ॥ २७ ॥

Ct. CLOSING

यो गोस्वामिकुलावतंसकलितः श्रीनन्दजू ख्यातिमान्
बुन्देलेन्द्रमहीपवन्द्यचरणः श्रीरामभक्ताग्रणीः ।
तद्भू रामकुमारको द्विजवरो यज्जन्मभूश्चैद्यष्ट-
ष्टीकां वा पदबोधिनीं लघुधियां स क्लृप्तवान् सिद्धये ॥१॥
यद्दत्तबुद्ध्या रचिताग्नयोऽसौ श्रीरामगीताप्रवृत्तिः शुभेति ।
तं पूर्णकामं निजबोधरूपं सनातनं सद्गुरुमानतोस्मि ॥ २ ॥
बाणखागधरणीमितशाके शुक्रमासि धवलेतरपक्षे ।
रामचन्द्रधरणीपतिगीताटिप्पणं हरितिथौ जनिमाप ॥ ३ ॥
उदयादित्यनगरे नीलकण्ठेशसन्निधौ ।
पूर्तिः पफाण गीतायाष्टीका वै पदबोधिनी ॥ ४ ॥

Ct. COLOPHON

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे श्रीरामलक्ष्मणसम्वादे गोस्वामिरामकुमारविरचिता श्रीरामगीतायाः पदबोधिनी टीका समाप्तिमगात् ।

Post-Colophonic

द्वितीयवैशाखकृष्णे प्रतिपदायां १ संवत् १८८८ । श्रीरस्तु ।

## 948. रामगीता सटीका

Ct. OPENING:
(f. 2)

× × × × बंध के नाम स्वरूप लखाईये है। शमः—शुभाशुभवासना को त्याग । दमः—बाह्य वितर्कों तिनको निग्रहः । उपरतिः—विषय में दोषदृष्टि करी विषय तैं उपरामः। तितिक्षाः—विषय वांछा होय तथापि कामादि के वेग कौं सहै परंतु विषय को सुख ताकौं भोगी न होय सहै ।

Ct. CLOSING :

दूहा– राम कह्यो सो दर सुन्यो, रामगीत सद्ग्रन्थ ।
केशव सो भाषा कियो, परमधाम को पंथ ॥ १ ॥
राम रामगीता रची, प्रभुता परम प्रशंस ।
शिव समग्र प्रर्छौ उमा, चतुरानन चतुरंश ॥ २ ॥

दोहा—कछु ब्रह्मा सुत हित कह्यौ कछु शौनक तै सूत ।
परसुराम प्रभुता लई, रण जीते रजपूत ॥ ३ ॥
जन केशव जानों कहा, क्षुद्रबुद्धि हो क्षुद्र ।
गुरुजन गुरु केशवकृपा, मंडुक तरचो समुद्र ॥ ४ ॥
चतुर प्रेष्य चित चतुर वर, शिष्य सु केवलव्यास ।
प्रेरित पूरित ध्वनि भई, दरवर केशवदास ॥ ५ ॥
भूरसवसुविश्वंभरा, संवत संख्या सार ।
पोष मास दल कृष्ण पुनि, तिथि दशमी बुधवार ॥ ६ ॥

COLOPHON : इति श्रीरामगीता श्रीरामलक्ष्मणसंवादे वैष्णवकेशवदासकृते भाषासहितं सम्पूर्णम्

Post-Colophonic : सवत् १८६५ मीति चैत्र विदी ११ समाप्तं । हस्ताक्षर मोकंमराम पठनार्थं । चितामनजी ।

## 975. पद्मपुराणम् (आदिखण्डः)

OPENING : ओम् श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ।
नमामि गोविन्दपदारविंदं, सदेन्दिरावन्दनमुत्तमाङ्गम् ।
जगज्जनानां हृदि सन्निविष्टं महाजनैकायनमुत्तमोत्तमम् ॥ १ ॥
एकदा मुनयः सर्वे ज्वलज्ज्वलनसन्निभाः ।
हिमवद्वासिनः सर्वे मुनयो वेदपारगाः ॥ २ ॥

CLOSING : कुर्यादेव सदालापं सच्छास्त्रं शृणुयान्नरः ।
तत्र पाद्मं महाशास्त्रं सर्वाम्नायफलप्रदम् ॥
आदिखण्डं च तन्मध्ये सदा पुण्यफलप्रदम् ।
भजध्वं गोविन्दं नमत हरिमेकं सुखकरं,
गमिष्यध्वं लोकानतिविमलभोगानतितराम् ।
शृणुध्वं हे लोका वदि(द)त हरिनामैकमतुलं,
यदीच्छेद् वीचीनां सुखतरणमिष्टानि लम्य(भ)त ॥

COLOPHON : इति श्रीपद्मपुराणे आदिखण्डे द्विषष्टितमोऽध्यायः ।६२। समाप्तोऽयं आदिखण्डः । शुभम् ।

Post-Colophonic : संवत् १८७६ शुभम् ।

## 976. पद्मपुराणम् (पातालखण्डः)

OPENING : श्रीराधाकृष्णाय नमः ।

अथ पाताले द्वयोरेकीभूतामरविटपिनोः कल्पलतिकासमाकीर्णस्थाने पुञ्जायित-कुसुमतल्पे वराहैकदेशे स्थित्वा धरण्युवाच ।

CLOSING:

इति ते कथितं सर्वं समासेन महेश्वरि ।
गोप्तव्यं च प्रयत्नेन स्वयोनिरिव पार्वति ॥

श्रीकृष्णरूपगुणवर्णनशास्त्रवर्गैः,
बोधाधिकार इह चेदलमन्यपाठैः ।
तत्प्रेमभावरसभक्तिविलासरास-
हारेषु चेत्खलु मनः किमु कामिनीभिः ।
तं चेतसापि भजतां व्रजबालकेन्द्रं,
वृन्दावनं क्षितितलं यमुनाजलञ्च ।
तद्भक्तपदपङ्कजधूलिभिश्चे-
लिप्तं वपुः किल वृथा गुरुचन्दनाद्यैः ॥

COLOPHON: इति **श्रीपद्मपुराणे पातालखण्डे** साराध्यायसंग्रहो श्रीमहादेवपार्वतीसम्वादे वैष्णव धर्मोत्कर्षवर्णने द्वादशोध्यायः । इति श्रीद्वादशाध्यायी समाप्ताऽभूत् ।

Post Colophonic: संवत् १८३८ क्वारमासे शुक्लपक्षे १ परवा शुभमस्तु श्रीराधा ।

## 978. पद्मपुराणम् (पातालखण्डः)

OPENING:

ओम् स्वस्तिश्रीगणेशाय नमः ।

ऋषय ऊचुः—

सम्यक् श्रुतो महाभाग ! त्वत्तो **रामाश्वमेधकः** ।
इदानीं वद माहात्म्यं श्रीकृष्णस्य महात्मनः ॥

सूत उवाच—

शृण्वन्तु मुनिशार्दूलाः **श्रीकृष्णचरितामृतम्** ।
शिवायै पृच्छ्यते शेषमेतद् वः कीर्तयाम्यहम् ॥

CLOSING: सूत उवाच—

यश्च वक्ति कथामेतां स तेन सदृशो भुवि ।
गुह्याद् गुह्यतमं विप्रा शिवज्ञानप्रदं भवेत् ॥
एतद्वः कथितं विप्राः पुण्यापुण्यतमं महत् ।
यद्रवं शृणुयाद् भक्त्या शिवलोके महीयते ॥
पुराणवक्त्रे दातव्यं वस्त्रं गे(?)हेमभूषणम् ।
भूमिः शस्यफलोपेता देया शक्त्यानुसारतः ॥
शिवराघवसंवादं सर्वाघौघनिकृन्तनम् ।
यः पठेच्छृणुयाद्वापि स याति परमं पदम् ॥

COLOPHON: इति **श्रीपद्मपुराणे पातालखण्डे** शिवराघवसंवादे उपरिभागे **राममोक्षो नाम चतुर्दशोत्तरशततमोऽध्यायः** ॥ ११४ ॥

## 1005. भागवतक्रमसन्दर्भटीका (प्रथमस्कन्धः)

OPENING: श्रीराधाकृष्णाभ्यां नमः।

तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ।
दाक्षिणात्येन भट्टेन पुनरेतद् विविच्यते ॥
तस्याद्य ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम्।
पर्यालोच्याथ पर्यायं कृत्वा लिखति जीवकः ॥

CLOSING: × × × तच्च कृष्णाङ्घ्रिसेवारूपमेवेति गूढोऽभिप्रायः। सतां सदाचाराणां सेव्या आदरयोग्याः कनीयस इति। तुश्छदसीति हि तृन्तृजन्तादिष्टे यसुनौ भवतः। तुरिष्टेमेयः स्विति च तृशब्दस्य लोपः स्यात्। ततो निमित्ताभावे नैमित्तिकस्याप्य भावात् टेर्लोपाच्च सिद्धयति।

COLOPHON: प्रथमे ऊनविंशः। समाप्तश्चायं प्रथमस्कन्धसन्दर्भः।

## 1017. भागवतपुराणम् (प्रथम-द्वितीयस्कन्धौ) भावार्थदीपिकासहितम्

Ct. OPENING: (1 Skandha) श्रीगणेशाय नमः।

वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि।
यस्यास्ति हृदये संवित्तं नृसिंहमहं भजे ॥ १ ॥
विश्वसर्गविसर्गादिनवलक्षणलक्षितम्।
श्रीकृष्णाख्यं परं धाम जगद्धाम नमामि तत् ॥ २ ॥
माधवो माधवाधीशौ सर्वसिद्धिविधायिनौ।
वन्दे परस्परात्मानौ परस्परनतिप्रियौ ॥ ३ ॥
सम्प्रदायानुरोधेन पौर्वापर्यानुसारतः।
श्रीभागवतभावार्थदीपिकेयं वितन्यते ॥ ४ ॥

× × ×

श्रीमद्भागवताभिधस्सुरतरुस्ताराङ्कुरः सज्जतिः,
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्तालवालोदयः।
द्वात्रिंशत् त्रिशत च यस्य विलसच्छाखासहस्राण्यलं,
पर्णान्यष्टदशेष्टदोतिसुलभो वर्वर्त्ति सर्वोपरि ॥ ७ ॥

Ct. CLOSING: प्रायं धर्मजमाहृतारिमवनौ (कृ)त्वा परीक्षिन्नृपं,
ब्रह्मास्त्रादभिरक्षितं च कृत्वा भुवि। (?)
अन्ते यः शुकरूपतः स्वपरमज्ञानोपदेशेन तं
शापावदमुं(?)नमामि परमानन्दाकृतिं माधवम् ॥ १ ॥
प्रथमस्कन्धगूढार्थपदभावार्थदीपिका।
सद्भिरुद्दीपनीयेमं यथास्यात्तत्त्वदीपिका

Ct. COLOPHON: इति श्रीभागवतमहापुराणे प्रथमस्कन्धे टीकायां शुकागमनं नाक एकोनविंशो ऽध्यायः । समाप्तोऽयं प्रथमस्कन्धभाष्यम् ।१। शुभं भवतु ।

Ct. OPENING (II Skandha)

ओम् नमः श्रीकृष्णाय ।

द्वितीये तु दशाध्याये: श्रीभागवतमादितः ।
उद्देशलक्षणोक्तिभ्यां संक्षेपेणोपवर्ण्यते ॥ १ ॥
तत्र तु प्रथमेऽध्याये कीर्त्तनश्रवणादिभिः ।
स्थविष्ठे भगवद्रूपे मनसो धारणोच्यते ॥ २ ॥
यन्नामकीर्त्तनं दानतपोयोगादिसत्फलम् ।
निरस्यं परमानन्दं हरिं नर नम स्मर ॥ ४ ॥
उक्तः पूर्वमुपोद्घातः सप्रसङ्गः शुकागमः ।
राज्ञा पृष्टं नृणां कृत्यमथाह शुकसन्मुनिः ॥ ४ ॥

Ct. CLOSING:

श्रीमद्भागवतं येन स्वब्रह्ममुखतो मितम् ।
ब्रह्मनारदयोः प्रोक्तं तं वन्दे गुरुमीश्वरम् ॥ १ ॥
य[त्सू]त्रयंत्रित विश्वं नर(री)नर्त्ति जगत्त्रयम् ।
संत्रस्तमेव पृच्छन्तु यदत्र स्खलितं मम ॥ २ ॥
द्वितीयस्कन्धसम्बन्धिपदभावार्थदीपिका ।
उद्दीप्यतामियं सद्भी(द्भिः)यथास्यात्‌···दीपकम् ॥ ३ ॥
रक्षन्तामिच्छया सन्तः क्षमन्तां मम साहसम् ।
मया हि स्वीयबोधाय कृतमेतन्न सर्वतः ॥ ४ ॥

Ct. COLOPHON: इति श्रीभावार्थदीपिकायां श्रीधरस्वामिविरचितायां द्वितीयस्कन्धे टीकायां दशमोऽध्यायः । अध्याय ।१०। शुभं भवतु ।

## 1080. भागवत-षष्ठसन्दर्भः

OPENING

श्रीराधावल्लभो जयति ।

अथ प्रेमसन्दर्भः ।६।

तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येनभट्टेन(भट्टेन)पुनरेतद् विविच्यते ॥ १ ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम् ।
पर्यालोच्याऽथ पर्यायं कृत्वा लिखति जीवकः ॥ २ ॥

COLOPHON: इति कलियुगपावनस्वभजनप्रयोजनावतारश्रीश्रीभगवत्कृष्णचैतन्यदेवचरणानुचर-विश्ववैष्णवराजसभासभाजनश्रीरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे प्रीति-सन्दर्भो नाम षष्ठः सन्दर्भः ।६। श्रीरस्तु ।

Post Colophonic संवत् १८२१ शाके १६८६ प्रवर्त्तमाने मिती आषाढमासे शुभे कृष्णपक्षे तिथौ १४ गुरुवासरे । लिखतं जोसी मोतीराम जैनगरमध्ये वासी रूपनगर का ।

## 1134. भागवतम् (दशमस्कन्धः) सुबोधिनीव्याख्यासहितम्

OPENING : श्रीमद्भागवतटीका सुबोधिनी तस्योपरि टिप्पणिका

अथ सप्तविंशाध्यायटिप्पणम् । ब्रह्मानन्दात् समुद्धृत्येति । ननु सर्वसमर्थत्वेन ब्रह्मानन्दात् स्वगृहस्थितास्य एव स्वामिनीभ्यो भजनानन्दं कुतो नाऽदाल्लोकवेदरया-जनपूर्वकं विवक्षितरीत्या कुतो दत्तवान् इत्यत आहुर्ब्रह्मानन्दादिति ।

CLOSING : पितृपादाब्जकृपया निरोधविवृतिर्मया ।
स्फुटीकृता यथाशक्ति भक्तानां तुष्टये हरेः ॥ १ ॥
अनेनैव प्रकारेण निरोधविवृतौ बुधैः ।
छेत्तव्यः संशय इति तं प्रदर्श्योपरम्यते ॥ २ ॥

नहि व्रजवधूपदाम्बुजपरागरागं विना,
मनागपि विचारणे भवति शक्तिरस्यास्ततः ।
मया चिरविचारहृद्गततदीयतात्पर्यमा-
श्रितेन लिखितं सदा गिरिवरेशपादाम्बुजम् ॥ ३ ॥

संशयपंककलंकितहृदया गोविन्दविट्ठलविवृतौ ये ।
ते श्रीविट्ठलवाणीपाथोभिर्निर्मलाः सन्तु ॥ ४ ॥

COLOPHON : इति श्रीगोपीजनवल्लभचरणैकतानश्रीविट्ठलदीक्षितविरचितो दशमस्कन्धप्रकरण-द्वयविवृतिप्रकाशः समाप्तः ॥श्रीः

## 1147. भागवतम् (दशमस्कन्ध-उत्तरार्द्धम्) सटीकम्

Ct. OPENING : श्रीगणेशाय नमः । श्रीकृष्णाय भारत्यै नमः । ॐ नमो भगवते वासुदेवाय ।
ततः पञ्चाशत्तमे तु जरासन्धभयादिव ।
कारयित्वाम्बुधौ दुर्गं तत्रिनाय निजं जनम् ॥ १ ॥
कपटान् कपटैरेव हत्वा दैत्यानयत्नतः ।
अजयच्च जरासन्धं धर्मेणैव तु धार्मिकम् ॥ २ ॥

Ct. CLOSING : अनुवृत्तेः फलमाह मर्त्यं इति । श्रीमत्याः कथायाः श्रवणकीर्त्तनयुक्तचिन्तया संवर्द्धितयाऽनुवृत्त्या तन्निष्ठत्वेन तस्य धाम लोकमेति । लोकत्वेऽपि कालाऽनाकलित-मित्याह दुस्तरेति । दुस्तरेति दुर्लभपुरुषार्थमाह ग्रामादिति ॥ ५१ ॥

Ct. COLPHON : इति श्रीभागवते महापुराणे दशमस्कन्धे श्रीपरमानन्दसम्मता दसमाश्रया नवति-तमः ॥ ९० ॥

Post-Colophonic : संवत् १७५८ चैत्रवदि अमावस्या भृगुवासरे । लिखितं बुन्देलखण्डे कोंचसमीपे । शुभमस्तु ।

## 1159. भागवतक्रमसन्दर्भटीका (द्वादशस्कन्धः)

OPENING : श्रीमद्राधागोविन्दौ जयताम् ।

तदेवमेकादशस्कन्धपर्यन्तग्रन्थेन निजाभीष्टं श्रीकृष्णलक्षणमाश्रयं यथावन्निरूप्य पुराणोपसंहा[रा]य द्वादशस्कन्ध आरभ्यते । यत्र तदन्तर्धाने लोकानां दुःखमेव स्यादिति दर्शयित्वा कथं चित्तं जगता(तो) नु निस्तारः स्यादिति च दर्शयिष्यते ।

COLOPHON : इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभगवत्कृष्णचैतन्यदेव चरणानुचरणाचारविश्ववैष्णवराजसभासभाजनभजनरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे क्रमसन्दर्भो नाम सप्तमः सन्दर्भः । समाप्तश्चायं श्रीभागवतसन्दर्भः ।

## 1174. विष्णुपुराणं स्वप्रकाशटीकासहितम्

Ct. OPENING : श्रीगणेशाय नमः । श्रीपरमानन्दमाधवाय नमः ।

श्रीबिन्दुमाधवं वन्दे परमानन्दविग्रहम् ।
वाचं विश्वेश्वरं गङ्गां पराशरमुखान् मुनीन् ॥ १ ॥

श्रीमच्चित्सुखयोगिमुख्यरचितव्याख्यां निरीक्ष्य स्फुटं ,
तन्मार्गेण सुबोधसङ्ग्रहवतीमात्मप्रकाशाभिधाम् ।
श्रीमद्विष्णुपुराणसारविवृतिं कर्ता यतिः श्रीधर-
स्वामी सद्गुरुपादपद्ममधुपः साधुः स्वधीशुद्धये ॥ २ ॥

श्रीमद्विष्णुपुराणस्य व्याख्या स्वल्पातिविस्तरा ।
प्राचामालोक्य तद्व्याख्या मध्यमेयं विधीयते ॥ ३ ॥

Ct. CLOSING : इति श्रीविष्णुपुराणव्याख्यायां सुप्रकाशाख्यायां चतुर्थेंऽशे चतुर्दशोऽध्यायः ।

(4. f. 27)
(4. f. 39)

× × × परमात्मपक्षे तु त्वदुक्तं पीनत्वादिकमत्यन्तं निर्युक्तिकमित्याह-आत्मेति । शुद्धो देहादिव्यतिरिक्तः अक्षरोऽचलः शान्तो रागादिशून्यः निर्गुणः सत्वादिगुणशून्यः प्रकृतेरपि परश्च ॥ ६७ ॥

## 1252. गीतामाहात्म्यम्

OPENING : श्रीगणेशाय नमः ।

अतसीपुष्पसंकाशं खगेन्द्रासनमच्युतम् ।
शयालुं शेषशय्यायां महाविष्णुमुपास्महे ॥ १ ॥

ईश्वर उवाच—

कदाचिदासने रम्ये सुखासीनं मुरद्विषम् ।
आनन्दयित्री लोकानां लक्ष्मीः पप्रच्छ सादरम् ॥ २ ॥

CLOSING : स तमष्टादशाध्यायमपठत्तेन शिक्षितम् ।
अथ पुण्येन तेनाऽसौ विष्णोः सायुज्यमाययौ ॥ ५६ ॥

हित्वा पुरन्दरो दीनं देवानां पदमल्पकम् ।
अतएव परं तत्त्वं मुनीनामिदमुत्तमम् ॥ ५७ ॥
दिव्यमष्टादशाध्यायमाहात्म्यं कथितं मया ।
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥ ५८ ॥

COLOPHON: इति श्रीपद्मपुराणे उत्तरखण्डे पञ्चाशत्साहस्र्यां संहितायां वैयासिक्यां गीता-माहात्म्ये उमामाहेश्वरसंवादे अष्टादशोध्यायः ॥ १८ । १००० ।

Post Colophonic: संवत् १७८६ माघसुदि ५ भौमवासरे लिखितं त्रिवाडी जदुराम मिश्र सदानन्दजी पठनार्थम् । श्रीकृष्णाय नमः ।

## 1264. जन्माष्टमी कथा

OPENING: श्रीगणेशाय नमः ।

अथ जन्माष्टमी लिख्यते । वेदव्यासाय नमाम्यहं । युधिष्ठिरोवाच—
जन्माष्टमीव्रतं ब्रूहि विस्तरेण मम प्रभो ।
कुतः कालात्समुत्पन्ना किं पुण्यं को विधिः स्मृतम्(तः) ॥ १ ॥

CLOSING: तस्य देशस्य राज्ञो हि सौराज्यं विगतद्वयम् ।
पर्जन्या वहत(वः)तत्र न भवन्ति ह्युपद्रवाः ॥
भुंक्ते हु विपुलान् सर्वान् कामान् मानो(मनसे)प्सितान् (?) ।
पुत्रपौत्राधिकां लक्ष्मीं प्राप्नुयात् सुचिरं पदम् ॥

COLOPHON: इति श्रीपद्मपुराणे जन्माष्टमीकथा सम्पूर्णम् ।

Post-Colophonic: संवत् १९०२ प्रमान्ये मासोत्तमे भाद्रपदमासे कृष्णपक्षे तिथौ १२ शुक्रे लिखित गोलवाल नारायण हस्ताक्षर श्रीरस्तु कल्याणमस्तु । × × ×
पुस्तक भट्टजी श्रीप्रथीराजजी री छे । पोल मे भट न लिखी छे । शुभं भवतु ।

## 1274. दशादित्यव्रतकथा

OPENING: श्रीगणेशाय नमः ।

कश्यप उवाच—
भानुवारे सिते पक्षे दशम्यां चैव नारद ।
प्रातःकालेऽथ मध्यान्हे स्नानं कुर्याद् यथाविधि ॥

CLOSING: पितृमातृपरित्यागी स्वामिनं रणसंकटे ।
त्यजेद् वा धर्मपत्नीं च कुर्वता प्राप्यते नरैः ।
तस्मात् सर्वप्रयत्नेन न्यायमार्गरतो भव ।
आवृद्धंसततो राज्यं न्यायमार्गेण वर्तते ॥

COLOPHON: इति श्रीस्कन्दपुराणे कश्यपनारदसंवादे दशादित्यव्रतं सम्पूर्णम् । शुभं भवतु ।

## 1275. दानभागवतम्

OPENING: श्रीगणेशाय नमः ।

योगिनां वल्लभं नत्वा गिरं कामेश्वरीं ततः ।
दानभागवते चास्मिंल्लिख्ये सतत्वलक्षणम् ॥ १ ॥

तत्रादौ ग्रन्थस्य पौराणिकत्वात् पुराणप्रतिपादनं विचार्यते । किमर्थः पुराणसंग्रहो भगवता ब्रह्मणा निष्पादितः उच्यते च ।

CLOSING: सूत उवाच—

यं प्रव्रजंतमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ।

इति मूलं, अन्यानि पद्यानि प्रथमाध्यायोक्तानि सर्वान्यनार्षाणीति दिक् ।
द्वितीयाध्याय एव प्रथमाध्यायः । नमोस्तु कामेश्वर्यै ।

COLOPHON: इति वणिकुवेरानन्दकृते दानभागवते पौराणिके द्वितीयपरिच्छेदे पञ्चमोपदेशे भागवतप्रतिपादनं नाम प्रथमोधिकारः ।

## 1276. दुर्जनमुखचपेटिका

OPENING: श्रीगणाधीशाय नमः ।

वल्लवीवल्लभं नत्वा ब्रुवे विद्वद्विनिश्चयम् ।
भागवताभिधे ग्रन्थे आर्षानार्षत्वसंशये ॥ १ ॥

CLOSING: ननु स्मृतीनां ऋषिप्रणीतत्वे सति वेदाविरुद्धार्थकत्वेन प्रामाण्यमिति चेन्न, लाघवेन वेदाविरुद्धार्थकत्वेन तत्प्रामाण्यस्योचितत्वात् ।

COLOPHON इति श्रीरामाश्रमविरचिता दुर्जनमुखचपेटिका समाप्ता ।

## 1280. नित्यविहारलीलावर्णनं सुबोधिनीसहितम्

OPENING: श्रीगणेशाय नमः ।

व्यास उवाच—

नैमिषे सूतमासीनं पप्रच्छुर्ऋषयोऽमलाः ।
किं नित्यं भगवद्रूपं ब्रूहि नो रोमहर्षणे ॥ १ ॥

नैमिषे नैमिषारण्ये आसीनं उपविष्टं सूतं सूतपुत्रं वा शिष्यपुत्रं ऋषयः शौनकादयः अमलाः निष्कल्मषाः इदं वक्ष्यमाणं पप्रच्छुः । किं पृष्टं वक्त इत्याह—भगवद्रूपं नित्यम् । किमिति हे रोमहर्षणे नो अस्मभ्यं ब्रूहि कथय ।

यत्र ब्रह्मादयो देवा वशिष्ठाद्यास्तपोधनाः
क्रीडन्ति मातरः सर्वाः कुमारैः सह यत्र च ॥

CLOSING: & COLOPHON इति श्रीबृहद्वामनपुराणे माहेश्वर्यां संहितायां लीलावर्णने नित्यविहारसुबोधिन्यां टिप्पणिकायां षष्ठोंशः । समाप्ता नित्यविहारलीला ।

पूर्वं गुर्जरदेशतः समभवद् वेदाख्यविप्रः सुधीः,
श्रीलक्ष्मीधरकोऽस्यसूनुरभवज्ज्योतिर्विदामग्रणीः ।
तत्पुत्रो हरिभक्तिनिष्ठितमतिर्यो रामशिष्योऽभव-
त्तेनाकारि सुबोधिनीति विदुषामानन्ददा टिप्पणी ॥ १ ॥
श्रीमन्माथुरवंशजोऽमलमतिर्यो द्वारकावासकः
श्रीकृष्णांघ्रिसरोजभक्तिसुदृढः सत्सङ्गमे हे वृणो(?) ।
विद्वद्दैन्यहरोऽभरात्मज इति ख्यातः सुधर्माविनौ
तेनैवाच्युततोषणाय सुधिया कारायिता टिप्पनी(णी) ॥ २ ॥
विकपञ्चेन्दुमिते शकेन्द्रसमये सौम्यायने भास्करे,
चैत्रे मासि वसन्तसंज्ञकऋतौ पक्षे सिते भार्गवे ।
पञ्चम्यां हि तिथौ शुभे निऋ तिभे लग्ने वृषे टिप्पनी(णी)
श्रीलक्ष्मीधरसूनुना विरचिता प्रीतोऽस्तु राधापतिः ॥ ३ ॥
शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र जनः सुखी भवतु ॥
शुभमस्तु ।

## 1288. पुष्करप्रादुर्भावो मिताक्षराटीकासहितः

Ct. OPENING: श्रीगणपतये नमः ।

नत्वा नारायणं वेदव्यासं मुनीन् गुरून् गुरून् ।
कुर्वेऽहं पुष्करप्रादुर्भावटीकां मिताक्षराम् ॥ १ ॥

भविष्यनिरूपणानन्तरं पुष्करप्रादुर्भावकथां निरूपयितुकामः तद्बीजभूतं जनमेजय-प्रश्नमवतारयति—प्रभावमिति सार्द्धेन । पुष्करे भगवन्नाभिकमले पुरा देवाः स[प्त]र्षिगण उद्भूतं एतद्रूपं निखिलं पद्मनाभस्य योगं प्राख्याहीत्यन्वयः । कीदृशस्य सागराम्भसि स्वपतः । कीदृशं योगं प्रभावं प्रभवत्यस्मादिति प्रभावस्तं सृष्टिकारकमित्यर्थः ॥ १ ॥

Ct. CLOSING उक्तपुष्करप्रादुर्भावकथाश्रवणादेः फलमाह—सार्द्धेन इमामिति । इमां पुष्कर-प्रादुर्भावरूपां यः श्रावयेत् । किं कृत्वा सर्वमिदमध्यात्मरूपमाख्यानं प्रधीत्य स्मृत्वा, इक् स्मरणे इति धातुः । अध्यात्मरूपां कथां यः श्रावयेत् स देवलोके महीयत इति सम्बन्धः । सार्द्धश्लोकः । पुष्करव्याख्यया देवपूजितः पुष्करेक्षणः पद्मिना पत्रवत् पूजय दले पुंमाञ्जले स्थितम् ॥ ५६ ॥

COLOPHON : इति पुष्करटीकायां विश्वेश्वरविरचितायां षड्विंशोऽध्यायः । समाप्तोऽयं ग्रन्थः ।

Post-Colophonic : संवत् १७६५ वर्षे पुरुषोत्तममासे कृष्णपक्षे प्रतिपत्बुधे व्यासक्षेत्रस्थे (स्थे)न श्रीगौड-ज्ञातीयभट्टरायमन्दनात्मजेन वीरनन्दनेन लिखितम् । तथा पुत्रपौत्राद्यवलोकनार्थम् । शुभं भवतु लेखकपाठकयोः । श्रीरस्तु ।

## 1294. पुष्करणोपाख्यानम्

OPENING: श्रीगणेशाय नमः। सरस्वत्यै नमः।

स्कन्द उवाच—

देवदेव पुनर्ब्रूहि भूभागं किञ्चिदुत्तमम्।

CLOSING: धने(न्या)काशीति विख्याता श्रीमालेऽमूत्र संशयः।

इत्थं निशाचरी राजन् सारिका सा वशीकृता॥

प्रसादेन सुरस्याद्य श्रीपुञ्जेन महीभुजा।

एतच्छृणोति यो भक्त्या सारिकाख्यानमुत्तमम्।

पुष्करणाख्यानमतुलं सर्वविघ्नविनाशनम्।

भूतप्रेतादिभिर्दुष्टैर्न कदाचित् स बाध्यते।

COLOPHON: इति श्रीस्कन्दपुराणे श्रीमालमाहात्म्यसारे पुष्करणोपाख्यानं सम्पूर्णम्।

पुष्करणाजाति गर्गाचार्यजी से भई, गर्गाचार्यजी रे पिता भरद्वाजजी, भरद्वाजजी रे पिता बृहस्पतिजी, बृहस्पति रे पिता अंगिराजी, अंगिराजी रे पिता ब्रह्माजी, च्यार वेदरा गोत्र १२८ तिण मे ऋग्वेदरा ३३, जजुर्वेद रा ३२, सामवेद रा ३२, अथर्वण वेद रा ३१, जुमले १२८ गोत्र ब्राह्मणां रा है, तिणा गोत्रां रा सारा ही ब्राह्मण है। या हकीकत स्कन्दपुराण रो प्रथम माहेश्वर खण्ड याको नाम फेर बालखिल्य खड कहते है, तामे है। स्कन्द रा खंड सात है तिण मे द्वितीय वैष्णव खण्ड मे पुष्करणां री उत्पत्ति तीजा परिच्छेद मे है। आगे समस्त ब्राह्मण एक थे सो उसके माहोमाहै किसी का आचार न्यूनाधिक रहणे याते जुदे जुदे भये हे।

## 1304. भगवज्जन्म दृष्टि-पद्यार्थप्रकाशः

OPENING: श्रीगणेशाय नमः। श्रीराधावल्लभो जयति। श्रीकिशोरीरमणचरणकमलेभ्योनमः। दशमे भगवज्जन्मदृष्टिपद्यार्थं उच्यं(च्यते)।

तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शंखगदाद्युदायुधम्।

श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम्॥ १॥

महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम्।

उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत॥ २॥

अस्यार्थो निरूप्यतेऽस्माभिः। वसुदेवस्तं ऐक्षत इत्यस्य पद्यस्य वंशस्थछन्दसो युग्मकजातित्वाद् द्वितीयपद्यान्तेनान्वयः।

CLOSING: यद्वा विभिः पक्षिभिस्तल्लक्ष[ण]या वाहनविशेषयुक्तं रोचन्ते. दीप्यन्ति ये ते विरोचा देवाः हंसगरुडमयूरादिवाहनविशेषारूढास्तेषां मां शोभां 'मा माने' इति धातोःप्रमाण-विशेषकृच्छक्ति वा आनयति प्राणयति पालयति यः स तम्, 'अन प्राणने' इति धातु-रूपात् सर्वदेवताशोभाशक्तिपालकं स्वात्मोद्धारकर्तारमपि मनसा निश्चित्य श्रीवसु-देवोऽमुं श्रीकृष्णमेतादृशमैक्षत।

COLOPHON: इति पद्यार्थप्रकाशः, दशमस्थजन्मार्थस्यार्थप्रकाशोऽयं सङ्कृतः।

## 1314. भागवतस्वरूपशङ्कानिरासः

OPENING : श्रीगणेशाय नमः ।

श्रीभाग[व]तमष्टादशपुराणान्तर्गतमतिरिक्तं वा, किं तावत् प्राप्तं, अतिरिक्तमिति । कुतः, प्रथमे व्यासनारदसंवादे व्यासभारतकरणोत्तरमपरितुष्टौ नारदोपदेशात एतत्करणोक्तेः ।

अष्टादशपुराणानि कृत्वा सत्यवतीसुतं(तः) ।
चक्रे भारतमाख्यानं वेदार्थैरुपबृंहितम् । इति ।

CLOSING : अतः पुराणेषु कालत्रयस्य संकलीकृत्य कथना पुराणभारतयोः पूर्वापरभावस्याविवक्षित्वात् पुस्तकान्तरेषु अष्टादशपुराणानां कर्त्तेति पाठदर्शनाच्च नाष्टादशबहिर्भावोऽस्येति अष्टादशान्तर्गतत्वमेव श्रीभागवतस्य बुद्धिमद्भिरनुसन्धेयमिति ।

COLOPHON : इतिश्रीवल्लभाचार्यचरणैकतानपुरुषोत्तमविरचितः श्रीभागवतस्वरूपविषयकशङ्कानिरासः समाप्तः ।

Post Colophonic लिखितमिदं गोपीनाथेन ।

## 1342. रासपञ्चाध्यायी सटोका

Ct. OPENING श्रोम नमः । श्रीरासविहारिणे श्रीकृष्णाय ।

रसं यमाहुः श्रुतयः परेशं गुणार्णवं त्विड्घनमम्बुदाभम् ।
पीताम्बरं वेणुधरं किशोरं स नन्दसूनुस्तनुतां मुदं नः ॥ १ ॥

जानाति यां नन्दसुतः पुमर्थं स्वयं पुमर्थोऽपि निजं परेशः ।
सा राधिका श्रीनिकराधिकाऽमे रासेश्वरी हृत्कमले चकास्तु ॥ २ ॥

कृष्णं च राधां च तयोर्विशुद्धां लीलां च यो वेत्ति बुधो यथावत् ।
विरक्तचूडामणिरिद्धभावः स मां मुनिर्व्याससुतः पुनातु ॥ ३ ॥

(ऊ) नत्रिशो वेणुनादो रुक्षता आसिका गिरः ।
विक्रीडितं ततोऽन्तर्द्धिकौतुकं चेति वर्ण्यते ॥

Ct. CLOSING : व्रजस्त्रीणां भावानमृतमधुरानाशु दधति
मृता श्रीराधाया महिमनिकरेणातिमधुरणी ।
इयं पञ्चाध्यायीविवृतिरमितार्था शिखरिणी,
जगन्नाथप्रीत्यै किमु विशदवर्णा न भविता ॥ १ ॥

पञ्चाध्यायीटिप्पणीभावरत्नैर्दिव्यमा विश्वाभूषणेन प्रणीता ।
एतां श्रीगोविन्दपादाब्जभृङ्गाः कारुण्यार्द्राः साधवः शोधयध्वम् ॥ २ ॥

COLOPHON : इति वैष्णवानन्दिन्यां दशमस्कन्धटिप्पण्यां त्रयस्त्रिंशः ॥ ३३ ॥

## 1349. विरोधप्रकाशः

OPENING:

ओम् श्रीवरदमूर्तिर्जयति ।

सत्तास्फु(स्फू)र्त्ती यतो लब्धे विविधैर्मूर्तिभौतिकैः ।
जीवैश्च तटतत्त्वेन तन्महो जयति ध्रुवम् ॥ १ ॥

ध्यात्वादितद्विष्णुशिवादिशब्दैस्तात्पर्यतो बोध्यमखण्डरूपम् ।
पुराणसिद्धान्तमताविरोधं यज्ञेश्वराख्यः प्रकटीकरोति ॥ २ ॥

CLOSING:

पुराणाद्यविरोधोऽयमित्यमाविष्कृतो मया ।
यज्ञेश्वराभिधज्योतिर्विदा विद्वद्भिरीक्ष्यताम् ॥ ६७ ॥

COLOPHON:

इति ज्योतिर्विद्यज्ञेश्वरविरचिते विरोधप्रकाशः समाप्तः ।

Post-Colophonic:

सं० १८९३ मार्गबदि ६ लिखितं वृजवासि सिल्लु काश्याम् ।

## 1377. षड्दर्शनसमुच्चयः

Ct. OPENING:

ॐ अर्हम्

सज्ज्ञानदर्पणतले विमलेत्र यस्य
ये केचिदर्थनिवहाः प्रकटीबभूवुः ।
तेऽद्यापि भान्ति कलिकालजदोषभस्म-
प्रोद्दीपिता इव शिवाय स मेऽस्तु वीरः ॥ १ ॥

जैनं यदेकमपि बोधविधायिवाक्य-
मेवं श्रुतिः फलवती भुवि येन चक्रे ।
चारित्रमाप्य वचनेन महत्तरायाः
श्रीमान् स नन्दतु चिरं हरिभद्रसूरिः ॥ २ ॥

सन्निधेहि तथा वाणी षड्दर्शनाङ्कषड्भुजे ।
यथा षड्दर्शनव्यक्तिस्पष्टने प्रभवाम्यहम् ॥ ३ ॥

व्यासं विहाय संक्षेपरुचिसत्त्वानुकम्पया ।
टीका विधीयते स्पष्टा षड्दर्शनसमुच्चये ॥ ४ ॥

इह हि जिनप्रशासनप्रभावनाविर्भावनप्रदोदयभूरियशाश्चतुर्दशशतप्रकरणोपकृत-जिनधर्मो भगवान् श्रीहरिभद्रसूरिः षड्दर्शनप्रमाणपरिभाषास्वरूपजिज्ञासुशिष्यहितहेतवे प्रकरणमारिप्समाणो निर्विघ्नशास्त्रपरिसमाप्त्यर्थं स्वपरश्रेयोर्थं च समुचितेष्टदेवता-नमस्कारपूर्वकमभिधेयमाह ।

Ct. CLOSING: & Colophon

तत्समाप्तौ समाप्ता चेयं षड्दर्शनसमुच्चयटीका ।
खेलतोऽम्भू राजहंसौ यावद्विश्वसरस्तले ।
तावद् बुधैर्वाच्यमाना टीकेयं नन्दताच्चिरम् ॥ १ ॥

सप्ताशीतिश्लोक[सूत्र]टीकामानं विनिश्चितम् ।
सहस्रमेकं द्विशतीपञ्चाशदनुष्टुभाम् ॥ २ ॥

ग्रन्थाग्रं ।
प्रङ्कतोऽपि शत १२५२ ग्रन्थाग्रं ।

Post Colophonic[1] संवत् १६१२ वर्षे माघशुक्लपूर्णिमातिथौ रविवारे लिखितम् ।

## 1378. षड्दर्शनसमुच्चयः सटीकः

Ct. OPENING. ॐ श्रीसर्वज्ञाय नमः ।

Same as at no. 1377

Ct. CLOSING : इति श्रीषड्दर्शनसमुच्चयटीका समाप्तः ।
& COLOPHON : सप्ताशीतिश्लोकसूत्र-टीकामानं विनिश्चितम् ।
सहस्रमेकं द्विशतीद्वापञ्चाशदनुष्टुभाम् ॥ १ ॥

ग्र० १२५२

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ ॥

शुभंभवतु ।

## 1394. न्यायरत्नप्रकरणम्

OPENING: वाचकशिरःकोटीरहीरवाचकश्री५श्रीकल्याणविजयगणिचरणेन्दीवरेभ्यो नमः ।

श्रीशारदायै नमः । श्रीवीतरागाय नमः ।

ध्वंसितपरसिद्धान्तध्वान्तं गौतममतैकसिद्धान्तम् ।
नत्वा नित्यमधीशं शशधरशर्मा प्रकाशयति ॥ १ ॥

न्यायसिद्धान्तदीपोऽयं कथासु विजिगीषुभिः ।
धारणीयः प्रकाशाय सत्तर्कस्नेहसुप्रभः ॥ २ ॥

CLOSING : अनेनैव वाक्येनास्य ज्ञानमुत्पन्नं इति तस्या[भ्र]ममूलकतया व्युत्पत्तिग्रहेने(हणे) समीचीन एव स्यादिति, मैवं, माद्यव्युत्पत्तिग्रहभ्रममूलकत्वेप्यग्रे समीचीनत्वोप० । अन्ये तु मतपोतप्यदिति श्रुतेरणिमादिप्रतिपादकश्रुतेश्च धर्माधर्मविनित्यज्ञानादिमपीश्वरे स्वीकुर्वंतीति सर्वमवदातम् ।

COLOPHON : इति महोपाध्यायशशधरविरचितन्यायरत्नप्रकरणः । श्री । शुभं भवतु । भद्रं भूयात् ।

## 1396. न्यायसिद्धान्तमञ्जरी

OPENING: श्रीगणेशाय नमः ।

अथ शब्दो निरूप्यते । तत्र शाब्दप्रमितिकरणं शब्दः । शाब्दत्वं च शब्दात् प्रत्येमीत्यनुभवसिद्धो जातिविशेषः । अन्यपदार्थान्यत्वव्यभिचारि अनुभवत्वाव्यापकजाति-

शून्यत्वे सति पदविषयकत्वाव्यभिचारिजातिशून्यधीत्वं वा, सत्यन्तं प्रत्यक्षानुमितिस्मृतीनां वारणाय ।

COLOPHON : इति श्रीभट्टाचार्यचूडामणिविरचितायां न्यायसिद्धान्तमञ्जर्यां शब्दपरिच्छेदः ।

Post-Colophonic: वेदाष्टाष्टेन्दु[१८८४]प्रमिते माधकृष्णे हरेर्दिने ।
देवीदत्तः सुपुत्रार्थं मञ्जरीमलिखन् मुदा ॥

इति गंगाप्रसादार्थमिति ।

## 1397. न्यायसिद्धान्तमञ्जरी

OPENING : श्रीगणेशाय नमः ।

प्रणम्य परमात्मानं जानकीनाथशर्मणा ।
क्रियते युक्तिमुक्ताभिर्न्यायसिद्धांतमञ्जरी ॥ १ ॥

इह किल निखिलनिखिललोकविमोक्षमुख्योपायं मननोपायमात्मनस्तत्वज्ञानमामनन्ति । तच्च पमाणाधीनमिति प्रमाणं निरूप्यते ।

CLOSING : अयं गवयपदवाच्य इति सेयमुपमितिर्नाम, नत्वेतत्प्रत्यक्षं चक्षुरादिव्यापारविगमेपि जायमानत्वात् । न च मानसं ततो विलक्षणतयानुभूयमानत्वात्, अन्यथाऽनुमितेरपि मानसत्वापत्तेः । नाप्यनुमितिः व्याप्तिज्ञानाय भावेऽप्युपपत्तेः । नाऽपि शाब्दं गवयत्वविशिष्टस्य उपस्थापकपदाभावात् । उपमितावयं गवयपदवाच्य इत्याकारिकायां गवयत्वावच्छेदेन गवयपदवाच्यत्वावगाहनात्, न तु गोसादृश्यावच्छेदेन तस्य गौरवेणानवच्छेदकत्वात् । अन्यथाऽप्रतीतमूलव्यवहारः प्रसंगः । न वा स्मृति × × × × × ×

## 1398. न्यायसिद्धान्तमञ्जरी-तर्कप्रकाशिकाटीका

OPENING · श्रीगणेशाय नमः ।

प्रत्यक्षनिरूपणानन्तरमुपजीव्योपजीवकभावसंगत्या अनुमानं निरूपयन् प्रतिजानीतेअथेति । अथ शब्दोऽनन्तर्यवचनः । तत्र च प्रत्यक्षनिरूपणस्यावधित्वमवगम्यते । अत एव च सिद्धत्वमपि निरूप्यत इति वर्तमानार्थकलट्प्रत्ययेन च अनुमाननिरूपणस्य च साध्यलाभः । एवं च सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते इति न्यायेन मलिनं ते वपुः स्नायाः इत्यत्रेवात्रापि प्रत्यक्षानुमाननिरूपणयोरुपजीव्योपजीवकभावलाभः । तथा चोपजीवकत्वसंगत्याऽनुमाननिरूपणमिति भावः ।

CLOSING : किञ्चिज्जल्पितमत्र तद्बहुतरं कृत्वा हृदि ध्यायतां-
दोषैरावृतमस्तयुक्तिनिवहं वाक्यं मदीयं बुधाः ।
चन्द्रः किञ्च कलङ्कितोऽपि भवति श्लाघ्याग्रगण्यः सतां
बालत्वं यदि तत्र हेतुरधुना बालीयमेतद्वचः ॥

COLOPHON : इति श्रीदीक्षितशितिकण्ठशर्मविरचितायां न्यायसिद्धान्तमञ्जरीदीपिकायां तर्कप्रकाशाख्यायामनुमानपरिच्छेदः समाप्तः ।

## 1399. निश्चयतस्त्वनिरुक्तिः

OPENING: श्रीगणेशाय नमः।

पर्वतोद्देश्यकवह्निविधेयकानुमित्यादिकं प्रति धूमालोकादिविषयकसकलपरामर्शसाधारणवह्निव्याप्यप्रकारकनिश्चयत्वाविनैव हेतुत्वम्। तत्र हेतुतावच्छेदके विषयतानिवेशे प्रयोजनाभावात्। वह्निव्याप्यत्वमत्र वह्नयभाववदवृत्तित्वं। एवं च व्यभिचाराभावेन तत्र कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशे प्रयोजनाभावात्। तदनिवेश्यैव तत्र कार्यकारणभावो बोध्य इत्याहुः, तदपरे न क्षमन्ते।

COLOPHON: इति श्रीरघुदेवतर्कालङ्कारविरचिता निश्चय[त]स्त्वनिरुक्तिः समाप्ता॥ १॥

## 1403. भाषारत्नम्

OPENING श्रीमन्नित्यकुञ्जविहारिणे नमः। श्रीनिम्बादित्यस्वामिने नमः।

चूडामणिपदाम्भोजभ्रमरीभूतमौलिना।
संक्षिप्य श्रीकणादेन भाषारत्नं वितन्यते॥

CLOSING: शक्यादशक्योपस्थितिर्हि लक्षणाजन्या न तु सैव लक्षणा इति। उच्यते, शक्यसम्बन्धो लक्षणा, अस्ति च गङ्गायां घोष इत्यादौ गंगापदशक्यस्य प्रवाहस्य संयोगरूपसम्बन्धः तीर इति लक्षणा। सा च लक्षणा द्विविधा गौणी शुद्धा च। तत्र सादृश्यात्मकशक्यसम्बन्धो लक्षणा गौणी। तथा च चन्द्रो मुखमित्यादौ मुखे चन्द्रसादृश्यात्। तदन्या शुद्धा च। तथा च गंगायां घोष इत्यादौ तीरसंयोगरूपगंगापदशक्यप्रवाहसम्बन्ध इति संक्षेपः।

COLOPHON इति श्रीकणादतर्कवागीशभट्टाचार्यविरचितं भाषारत्नं समाप्तम्।
श्रीजगन्नाथस्वामिने नमः।

## 7404. महाविद्या-दशश्लोकीसूत्रं सविवरणम्

W.-OPENING: अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यन्न तत्।
साध्यवद्वृत्तितायुक्तं साध्यते साध्यवर्जिते॥ १॥

आत्मा शब्देतरानित्यनित्यवृत्तित्वानधिकरणाऽनित्यवृत्तिधर्मवान् मेयत्वाद् घटवत्॥ १॥

W.-CLOSING: अपक्षसाध्यवद्वृत्तिविपक्षान्वयि यन्न तत्।
साध्याश्रयविपक्षान्यविपक्षे व्यतिरेकभाक्॥ १०॥

यथा शब्दः शब्देतरानित्यनित्यावृत्याकाशान्यनित्यमात्रवृत्तित्वानधिकरणाकाशधर्मवान्॥ १६॥

W.-COLOPHON: इति षोडशानुमानात्मकदशश्लोकीमहाविद्यासूत्रम्।

Ct. OPENING: भुतिमयतनु केचित् केचिदानन्दरूपं
वियत्सिततनु केचित् केचिदच्छस्वरूपम्

अभिदधति यदेकं तन्नमामीह जन्म-
स्थितिलयपरितापारम्भहीनं स्वरूपम् ॥ १ ॥

महाविद्यानिगूढार्थदर्शिनी दीपिका मया ।
क्रियते धीमतामन्तस्तमोविच्छित्तिहेतवे ॥ २ ॥

पक्षाक्षेपः पूर्वं तदनु परिपाटीविघटनं,
विपक्षव्यावृत्तिस्तदनु तदनु स्वार्थकथनम् ।
ततस्तेषां वृत्तिः प्रतिभटमुपक्रम्य विरले,
स्थले कार्यत्येवं विवरणमिदं नः प्रभवति ॥ ३ ॥

अथ पुनरपि प्रथममेवानुमानं माध्याश्रयविपक्षव्यावर्त्तनेन भङ्ग्यन्तरेण दर्शयति—अपक्षेति । अस्यायमर्थः—अपक्षः पक्षादन्यो यः साध्यवान् स पक्षः । तद्वृत्ति विपक्षवृत्ति च यन्न भवति । यच्च साध्याश्रयो विपक्ष आकाशस्तस्मादन्यो यो विपक्षो नित्यमात्रं तद्वृत्ति न भवति । तथाभूतं धर्मान्तरं वास्तव पक्षे साध्यते इति सम्बन्धः । अथ पदयोजना—अत्र शब्देतरानित्येत्यनेनापक्षसाध्यवद्वृत्तीति व्याख्यातम् । नित्येत्यनेन विपक्षान्वयीति । अवृत्तीत्यनेन यन्नेति । आकाशान्येत्यनेन साध्याश्रयविपक्षान्येति । नित्यमात्रत्ववृत्तित्वानधिकरणेत्यनेन विपक्षे व्यतिरेकभागिति । इति पदयोजना । अथ व्यावृत्यचिन्ता—आकाशधर्मवानिति कृते नित्यत्वेन विपरीतसाधनं स्यात्तदर्थं नित्यमात्रवृत्तित्वानधिकरणेति । तथापि द्रव्यत्वेन व्याघातः । तदर्थं आकाशान्येति । तथापि द्रव्यत्वेन व्याघातस्तदवस्थ एव, तदर्थमनित्यनित्यावृत्तीति । तथापि न विवक्षितसिद्धिरिति । शब्देतरेति पदं प(प्र)क्षिप्तम् । इति सर्वमनवद्यम् । इति षोडशोदाहरणम् ।

महाविद्यादशश्लोकी विवृताऽपि चिरन्तनैः ।
मन्दधीवृद्धिसिद्धयर्थं विवृतेयं यथागमम् ॥ १ ॥

Ct. COLOPHON: इति महाविद्यादशश्लोकीविवरणम् ।

Post-Colophonic: संवत् १४६१ वर्षे सीरोहीनगरे लिलिखानम् ।

## 1407. सप्तपदार्थी-पदार्थचन्द्रिकाटीका

OPENING: श्रीगणेशाय नमः ।

कर्णोत्तंसितशेषशेषफणिमृत्पुच्छच्छटापीडनो-
न्मीलच्चन्द्रकलामृतोर्मिकणिकास्वादेन मेदस्विता ।
मन्दस्पन्दविभिन्नबन्धमुरगाकल्पेन भीतिस्पृशः,
स्पृष्टायाः सुदृशो विलोक्य वदनं हृष्यन् हरः पातु वः ॥ १ ॥

अव्याद्व्याजसौभाग्यपदसङ्केतमन्दिरम् ।
महो महोदयद्वारं नवाम्बुदविडम्बितः ॥ २ ॥

अव्याद्व्याजसौभाग्यसङ्केतसदनं जगत् ।
महो महोदयद्वारं महामरकतद्युतिः ॥ ३ ॥

गुरुमार्गं वरेण बोधबीजं यदमन्तेति दधे बुधास्तदीयम् ।
इममङ्कुरमादरः फलं चेन्न विभेत पदार्थचन्द्रिकाख्यम् ॥ १ ॥

Ct. COLOPHON इति श्रीमत्तार्किकचक्रचूडामणिश्रीमच्छेषानन्तपण्डितविरचितसप्तपदार्थीव्याख्या पदार्थचन्द्रिका समाप्ता ।

Post-Colophonic: संवत् १७०४ वर्षे मार्गशीर्षकृष्णपक्षे सप्तमीतिथौ लिखितोऽयं ग्रन्थः शुभं भवतु श्रीर्भवतु ।

## 1408. सप्तपदार्थीटीका

Ct. OPENING: (f. 2) अभावस्त्विति । यन्मतेऽभावो द्विविधः, संसर्गाभावोऽन्योन्याभावभेदादिति । संसर्गाभावस्त्रिविधः-प्रागभावप्रध्वंसाभावात्यन्ताभावभेदादिति च विभागस्तन्मतेऽभावत्वव्याप्यमभावसंसर्गाभावत्वं विभाजकं, संसर्गाभावत्वव्याप्यं प्रागभावत्वादिसंसर्गाभावविभाजकम् । एतन्मते तु संसर्गाभावत्वं विभाजकोपाधिर्नास्त्येव ।

Ct. CLOSING: श्रीवासुदेवपरायण-श्रीविष्णुदासतनूजन्म-बलभद्र-माध्वीपुत्रकृतसन्दर्भः समाप्तः ।

रमापतिपदद्वन्द्वसमर्पणपटीयसी ।
बलभद्रकृता रम्या वर्ततां विदुषां मुदे ॥ १ ॥

COLOPHON: इति श्रीबलभद्रकृता सप्तपदार्थीवृत्तिः समाप्तम् ।

## 1410. सप्तपदार्थी-मितभाषिणीटीका

Ct. OPENING: (f. 2) × × × × मन्यसे तर्हि तत्प्रदर्शनेन विना व्यतिरेकप्रदर्शनात् । अप्राप्तकालता, अवयवविपर्यासवचनमप्राप्तकालता इति सूत्रे अवयवशब्दस्य उपलक्षणतया, तदन्यविपर्यासस्यापि । तथात्वादिति अतो न व्यतिरेकिप्रमाणं इति चेन्मैवं मंस्थाः ।

Ct. CLOSING: गौराष्ट्रदेशोऽखिलराष्ट्रवर्यः सदाकरो दक्षिणभूमिनिष्ट(ष्ठः) ।
विराजते सह्यगिरीन्द्रसानौ यत्रास्ति गोकर्णमहाबलेशः ॥ १ ॥

तद्देशजन्मा यतिरेकवर्यो सरस्वतीमस्तकमाधवाख्यः ।
सोऽयं शिवादित्यकृतेरकार्षीट्टीकामिमां बालसुखप्रवृत्त्यै ॥ २ ॥

माधवाख्ययतीन्द्रेण कृष्णातीरनिवासिना ।
कृता सप्तपदार्थ्यास्तु टीकेयं मितभाषिणी ॥ ३ ॥

COLOPHON: इति श्रीमितभाषिणी सम्पूर्णा ।

नागपुरीयतपागच्छे नरपतिलिखितम् । सन्मानकपुरमध्ये ।

Post-Colophonic: संवत् १६६७ वर्षे पोषमासे शुक्लपक्षे चतुर्थ्यां तिथौ रविवारे संपूर्णीजाता। लेखकपाठकयोः कल्याणमस्तु । श्रीरस्तु । श्रीः ।

[ The following लेखनप्रशस्ति is in a different handwriting ]

संवत् १६६१ वर्षे श्रावणमासे कृष्णपक्षे षष्ठ्यां तिथौ राजश्रीमानसिंहराज्य

संग्रामपुरवास्तव्ये श्रीनेमिनाथचैत्यालये श्रीमूलसंघे सरस्वतीगच्छे बलात्कारगणे आचार्यश्रीकुन्दकुन्दाचार्यान्वये भट्टारकश्रीजिनचन्द्रदेवास्तत्पट्टे भट्टारकश्रीचन्द्रकीर्त्ति-देवास्तत्पट्टे भट्टारकश्रीदेवेन्द्रकीर्त्तिस्तदाम्नाये खण्डेलवालान्वये भौसागोत्रे साहश्री भरथा-तत्पुत्रः साह श्रीगंगा-तद्भार्या गौरादे तत्पुत्रास्त्रयः प्रथमः पुत्रः चिरजीवी सहसमल-स्तद्भार्या सुहागदे, द्वितीयपुत्रः चिरजीवी कला तृतीयः चिरजीवी मल्ला एतेषां मध्ये श्रीजिनोपदिष्टधर्मनिरतः श्रीमज्जिनेन्द्रचरणकमलवरभ्रमरः श्रावकाचारचतुरः आहारा-भयभैक्ष्यशास्त्रेतिवरदानचतुष्टयीवितरणैककल्पवृक्षः इत्याद्यनेकगुणगणालंकृतः चिरजीवी श्रीसहसमल्लस्तेनेयं मितभाषिणी टीका लिखाप्य अनादिकालबद्धज्ञानावरणकर्मक्षयार्थं। ज्ञानपात्र पण्डितकेशवस्तस्मै पठनार्थं दत्ताः। दातुःकल्याणमस्तु।

सुखदेवर्षे प्रतिरियम्।

## 1413. अनुमितिविचारः

OPENING : श्रीगणेशाय नमः। श्रीरामचन्द्राय नमः।

अनुमितिपरामर्शयोः सामान्यतोऽनुमितित्वपरामर्शत्वाभ्यां कार्यकारणभावः परा-मर्शत्वं जातिविशेषः। न तु व्याप्तिविशिष्टपक्षनिश्चयत्वम्। अतो व्याप्त्यादेः साध्यादि-भेदेन अननुगमेपि न क्षतिः। न च तादृशतातो मानाभावः। अनुमितिरूपानुगतकार्य जनकजनकतावच्छेदकतयैव तत्सिद्धेः।

COLOPHON : इति श्रीहरिरामतर्कालङ्कारविरचितोऽनुमितिविचारः समाप्तिमगात्।

Post-Colophonic : संवत् १८०५ मीति अगहन वदी ५ वार अनवार के पोथी समाप्त। जो देख्या सो लिखा मम दोष न दीयते।

## 1455. तर्कसङ्ग्रह-बालबोधिनीटीका

Ct. OPENING : गणाधीशं नमस्कृत्य सर्वविघ्नहरं विभुम्।
तर्कसंग्रहसद्व्याख्यामातनोमि मनोरमाम्॥ १॥

Ct. CLOSING : ननु प्रमाणप्रमेयादिना विद्यमानत्वात् कथं सप्तैव पदार्था इत्यत आह—सर्वेषा-मिति प्रमाणप्रमेयादीनामित्यर्थः। अपि न सक्तिः सादृश्यादिपरिग्रहः उक्तपदार्थानां द्रव्यादिपदार्थः।

COLOPHON इति अन्नम्भट्टकृततर्कसंग्रहटीका बालबोधिनी सम्पूर्णा।

Post-Colophonic : संवत् १७८६ वर्षे। होलिकादिने। श्री

## 1458. तर्कामृत-चषकटीकान्वितम्

Ct. OPENING : श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः। ॐ

आत्मरूपगुणनृत्यकारिणे लोचनाकलिततत्त्वसाक्षिणे।
नूतनोद्भवसमाधिहेतवे नीलकण्ठगुरवे नमो नमः॥ १॥

गुरुमणिना यत्पूर्वं यस्याग्रे स ग्रहाग्रणीस्तनयः ।
कविमिव तं कवयन्तं तातं नारायणं वन्दे ॥ २ ॥

मुक्तावलीप्रकाशात् स्फुरिते चषके समर्पितं सुधिया ।
गंगारामेण मया पिबन्तु तर्कामृतं सुधियः ॥ ३ ॥

W.-OPENING: दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये (पाये) तदनन्तराभावादपवर्गः ।

W.-CLOSING: & COLOPHON: विशेष्यसङ्गतस्यान्ययोगव्यवच्छेदः यथा पार्थ एव धनुर्धर इत्यादौ । एवं दिशा सर्वत्र बोध्यम् ।

इति श्रीजगदीशभट्टाचार्यविरचितं तर्कामृतं समाप्तम् ।

Ct. CLOSING: & COLOPHON
चषकसुवर्णस्पर्शं विमकरकरकृतपरामर्शम् ।
जगदीशमथनकल्पं पिबन्तु तर्कामृतं तदाकल्पम् ॥ १ ॥

सूत्रं स्वयं न वलितं मणिर्न घटितस्तथापि चास्माकम् ।
मालाकाराणामिव ममता ग्रन्थे स्वकीयकौशल्यात् ॥ २ ॥

इति श्रीजड्युपनामकगङ्गारामविरचितस्तर्कामृतचषकः सम्पूर्णः ।
वर्षे वर्षाकाले चषकं षोडशवसुवसुधामिलिते ।१८१६।
व्यलिखद् गंगारामो गंगारामोमयप्रीत्यै ॥

× × ×

[ In a different handwriting ]

तर्कामृतचषकपुस्तकं सम्पूर्णम् ॥

तर्कामृतचषकोऽयं गंगारामेण शोधितः सर्वः ।
पुस्तकलालसमनसो विदुषो मनसोऽस्तु तोषाय ॥ १ ॥

श्रीसाम्बसदाशिवार्पणमस्तु ।

## 1461. पदार्थमाला

OPENING: श्रीहरिः ।

स्वीकृतकुपितयशोदाश्रमहरगोदामबन्धनव्यसनम् ।
नलिनीदलसुकुमारं नन्दकुमारं नमस्यामः ॥ १ ॥

श्रीमता जयरामेण युक्तिमौक्तिकगुम्फिता ।
पदार्थमाला सन्माला विलासाय विधीयते ॥ २ ॥

CLOSING: भाष्यादुक्तिषु हीनयुक्तिषु रतिः प्रेक्षावतां नेक्ष्यते,
प्राचार्यैर्विहिता वियुक्तिरहिता वाणी क्वचिल्लक्ष्यते ।
मत्वैवं जयराम एव विपुलैः सद्युक्तिमुक्ताफलैः,
प्रव्यक्तां वितनोत् कोविदमुदे शब्दार्थमालामिमाम् ॥ १ ॥

श्रीरामाय नमः । श्री ।

पदार्थमालां यदि नाम बाला लीलावशादप्यनुशीलयन्ति ।
तदा दुरूहार्थपयोधिपारं विना विचारं परिशीलयन्ति ॥ २ ॥

COLOPHON : इति श्रीजयरामपञ्चाननविरचितायां पदार्थमालायां द्रव्यपरिच्छेदः समाप्तः ।
शुभमस्तु लेखकपाठकयोः । शुभं भवतु कल्याणमस्तु ।

[ In a different handwriting ]

Post Colophonic संवत् १६६६ वर्षे अग्रहणशुक्लदशम्यां लिखापितमिदम् ।

## 1467. शब्दनिरूपणम्

OPENING : श्रीगणेशाय नमः । श्रीवेदव्यासाय नमः ।

उपमानस्य शक्तिग्राहकत्वेन शब्दोपजीव्यत्वात् तन्निरूपणानन्तरं शब्दो निरूप्यत इत्याह—अथेति । यद्यप्यतिदेशवाक्यरूपस्य शब्दस्याप्युपमानोपजीव्यत्वं तथापि न सर्वस्य तथात्वमुपमानस्य तु सङ्केतमात्रविषयतया सर्वस्यैव शब्दोपजीव्यत्वं, अतस्तदेव पुरस्कृतमिति ध्यायेयम् ।

CLOSING तथा चोपस्थितपदार्थपरित्यागादनुपस्थितपदार्थकल्पनादभावविधित्वाच्च नियमापेक्षया दोषत्रयवतीपरिसंख्यानन्यगत्येति । तत्रेदं चिन्त्यम्, याजनादिजन्यतत्तदर्जने इतरोपायव्युदासस्यार्थलभ्यत्वेपि कृष्यादिभिर्नार्जयेदित्यस्याप्राप्तेः । अनन्यगत्या नियमेपि निषेधस्यैव वाक्यार्थत्वौचित्यात् । अन्यथा कृष्यादिभिरर्जयेदेव तज्जन्यार्जन तत्सम्बन्धव्युदासाभावादिति । श्रीरस्तु ।

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः स्थिरा भवतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्यायात् पथः प्रविचलन्ति पदं न धीराः ॥ १ ॥

## 1507. विवेकमार्त्तण्डः

OPENING : ॐ नमः परमात्मने, श्रीगुरवे नमः । ॐ ।
श्रीगुरुं परमानन्दं वन्दाम्यानन्दविग्रहम् ।
यस्य सन्निधिमात्रेण चिदानन्दायते वपुः ॥ १ ॥
गोरक्षशतकं वक्ष्ये भवपाशविमुक्तये ।
आत्मबोधकरं पुंसां विवेकद्वारकुञ्चिकाम् ॥ २ ॥

CLOSING: दुग्धे क्षीरं घृते सर्पिरग्नौ वह्निरिवार्पितः ।
अद्वयत्वं व्रजेन्नित्यं योगवित्परमे पदे ॥ ८९ ॥
भवभयवने वन्ह(ह्नि) मुंक्तिसोपानमार्गतः ।
परमार्थं प्रकटितं ग्रन्थं गुह्यातिगुह्यकम् ॥ ९० ॥

COLOPHON इति श्रीगोरक्षनाथविरचितो विवेकमार्त्तण्डः समाप्तः ।

Post-Colophonic सवत् १८७९ शाके १७४४ माघकृष्ण ११ भौमे शुभं भूयात् ।

## 1509. स्वयम्बोधः

OPENING :

श्रीगणेशाय नमः ।

वामदेव उवाच—

प्रणम्य शिरसा देवं वामदेवः कृताञ्जलिः ।
जीवन्मुक्तिपदोपायं कथयस्वेति पृच्छति ॥ १ ॥

ईश्वर उवाच—

परं ज्ञानमहं वेद्मि येन तत्त्वं प्रकाशते ।
येन विच्छिद्यते सर्वमाशापाशादिबन्धनम् ॥ २ ॥

आधारादिषु चक्रेषु सुषुम्णाद्यासु नाडीषु ।
प्राणादिषु समीरेषु परं तत्त्वं न तिष्ठति ॥ ३ ॥

CLOSING :

अन्यजन्मकृताभ्यासात् स्वयं तत्त्वं प्रकाशते ।
सुप्तोत्थितो(तेऽ)स्तु पुरुष उपदेशादिभावना ॥ १२ ॥

शुद्धाभ्यासस्य शान्तस्य सदैव गुरुसेवनात् ।
गुरुप्रसादात्तत्रैव तत्त्वज्ञानं प्रकाशते ॥ १३ ॥

COLOPHON : इति ईश्वरप्रोक्तस्वयंबोधनाम द्वितीयोऽध्यायः ॥ श्रीः

## 1513. हठयोगप्रदीपिका

OPENING :

श्रीमन्महागणपतये नमः ।

श्रीआदिनाथाय नमोऽस्तु तस्मै येनोपदिष्टा हठयोगविद्या ।
विराजते प्रोन्नतराजयोगमारोढुमिच्छोरधिरोहिणीव ॥ १ ॥

प्रणम्य श्रीगुरुं नाथं स्वात्मारामेण योगिना ।
केवलं राजयोगाय हठयोगो(ग उ)पदिश्यते ॥ २ ॥

तन्त्रग्रन्थनिवाहद्वो (निबद्धौ वै) हठयोगो न दृश्यते ।
राजयोग[:]कृतः शान्तं ब्रह्मानन्दपरं पदम् ॥ ३ ॥

षडङ्गं वेदचत्वारो मीमांसादिद्वितीयकम् ।
एवं भ्रान्तिमयं सर्व(र्वं)शास्त्रमोहे विमोहितम् ॥ ४ ॥

तस्मात् त्रिभुवने लोका(काः)शास्त्रभ्रान्ति(न्तौ)विमज्जति ।
अनेकशास्त्रभ्रमणादस्माकं भ्रामितं मनः ॥ ५ ॥

भ्रान्त्या बहुमतध्वान्ते राजयोगमजानताम् ।
हठप्रदीपिकां धत्ते स्वात्मारामः क्षमाकरः ॥ ६ ॥

प्रसादं कुरु मे नाथ हंसभेदेन शाम्भवम् ।
एतेभ्यः गुह्यको(कं)ज्ञानं हठयोगं प्रकाशये ॥ ७ ॥

CLOSING:

आलोक्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं योगशास्त्रपरं मतम् ॥ ३५६ ॥

यस्मिन् ज्ञाने सर्वमिदं ज्ञानं भवति निश्चितम्।
अस्मिन् परिश्रमः कार्यः किमन्यत् शास्त्रभाषितम् ॥ ३५७ ॥

हठप्रदीपिकां धत्ते शिवज्ञानकरं परम्।
कथयन्ति च शृण्वन्ति सर्वपापैः प्रमुच्यते ॥ ३५८ ॥

हठप्रदीपिकां श्रुत्वा सिद्धान्तग्रन्थमुत्तमम्।
त्यक्ता भ्रान्ति न शास्त्राणि सतां सद्यः परा गतिः ॥ ३५९ ॥

एवं मया समासेन हठयोगसमीरितम्।
य इदं पठते पुण्यं परलोके महीयते ॥ ३६० ॥

योगशास्त्रमिदं गोप्यं शंभुना सूचितं पुरा।
सुशिष्याय प्रदातव्यं योगज्ञानपरम्परा ॥ ३६१ ॥

एतत्पवित्रं परमं योगज्ञानसमन्वितम्।
ज्ञानं गुह्यतमं पुण्यं योगसंगृह्यतारकम् ॥ ३६२ ॥

उक्ते च सर्वशास्त्राणि सर्वविद्या च पूर्णताम्।
आदिनाथयस्कृत्यं सर्वसारसमुद्धृतम् ॥ ३६३ ॥

इति तु सकलयोगशास्त्रसिन्धोः परिमथितावकृष्य सारभूतम्।
अनुभवतु हठामृतं मयीन्द्रां यदि भवतामजरामरत्विछा (त्वेच्छा) ३६४ ॥।

COLOPHON: इति श्री सहजनाथशिष्येण श्रीस्वात्मारामयोगीन्द्रेण विरचितायां हठप्रदीपिकायां सिद्धांतमुक्तावल्यां षष्ठोपदेशः। इति। श्रीरस्तु।

Post-Colophonic: श्रीमन्महाराजाधिराजजीश्रीजयसिंहदेवजीकस्याज्ञया लिखितमिदं तुलारामेण। संवत् १७६५ वर्षे चैत्रे मासे कृष्णे पक्षे १०।

श्रीरामो जयति। श्रीगणपतये नमः।

## 1545. आत्मबोधः प्रकाशिकाटीकोपेतः

Ct. OPENING

श्रीगणेशाय नमः।

शतमखपूजितपादं शतपथमनसोप्यगोचराकारम्।
विकसितजलरुहनेत्रं सीताछायाङ्कमाश्रये रामम् ॥ १ ॥

इह भगवान् शङ्कराचार्य उत्तमाधिकारिणां वेदान्तप्रस्थानत्रयं निर्माय तदवलोकनासमर्थानां मन्दबुद्धीनामनुग्रहार्थं सर्ववेदान्तसिद्धान्तसंग्रहमात्मबोधाख्यं प्रकरणं दिदर्शयिषुः प्रतिजानीते।

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम्।
मुमुक्षूणामपेक्ष्योयमात्मबोधो विधीयते ॥ १ ॥

CLOSING: & COLOPHON (f. 1)

मन्वात्मनः प्रतिबन्धकदुरितपरिहारार्थं प्रयागादितीर्थयात्रोद्योगः कर्तव्य इत्याशंक्य स्वात्मतीर्थस्नातस्य किञ्चित् कर्तव्यमस्तीत्याह ।

दिग्देशकालाद्यनपेक्षसर्वगं शीतादिहृन्नित्यसुखं निरञ्जनम् ।
यः स्वात्मतीर्थं भजते विनिष्क्रियः स[:] सर्ववित् सर्वगतोऽमृतो भवेत् ॥६७॥

इति श्रीपरमहंसपरिव्राजकाचार्यशंकराचार्यविरचितमात्मबोधप्रकरणं समाप्तम् ।

यो विनिष्क्रियः परमहंसः स्वात्मतीर्थं भजते सेवते स सर्ववित् सर्वात्मिकमात्मानं वेत्तीति सः। XXXXX नित्यसुखं मोक्षानन्दप्रापकत्वात् अतएव निरञ्जनं निर्मलमिति इतरतीर्थेषु तद्विपरीतं द्रष्टव्यम्। तस्मादात्मतीर्थरतस्य न किञ्चिदवशिष्यत इति भावः।

इति श्रीपरमहंसपरिव्राजिकाचार्यगोविन्दाचार्यविरचिता आत्मबोधप्रकाशिका सम्पूर्णा ।

## 1549. उपदेशसाहस्री-पदयोजनिकाटीका

OPENING:

श्रीगणेशाय नमः ।

यत्राध्यस्तमिदं सर्वमेयमात्राद्यविद्यया ।
भाति नो भाति यज्ज्ञानात् तदस्मि ब्रह्मचित्सुखम् ॥ १ ॥

तदेवं सर्वोपनिषदर्थसारसङ्ग्रहं गद्यपद्यप्रबन्धेन संक्षेपतो युक्त्योपदिश्य पुनरप्युक्तमेवार्थजातं पद्यबन्धप्रबन्धेन सोपस्करं विस्तरेणोपदेष्टुकामो भगवान् भाष्यकारः पद्यग्रन्थारम्भे ग्रन्थप्रतिपाद्यपरदेवतानमस्काररूपं मङ्गलं कृतं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति—चैतन्यमिति ।

चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥ १ ॥

W.-CLOSING: & COLOPHON:

विमथ्य वेदोदधितः समुद्धृतं सुरैर्महाब्धेस्तु यथा महात्मभिः ।
तथामृतं ज्ञानमिदं हि यैः पुरा नमो गुरुभ्यः परमोक्षितं च यैः ॥ २८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्यश्रीगोविन्दभगवत्पादपूज्यशिष्यस्य श्रीशंकरभगवतः कृतिः सकलवेदोपनिषत्सारोपदेशसाहस्री समाप्ता ।

Ct. CLOSING: & COLOPHON:

उपदेशसहस्रीयं विवृता हि महात्मभिः ।
श्रद्धावशान्मयाप्यस्याः पदयोजनिका कृता ॥ १ ॥

समस्तवेदार्थरहस्यगद्यपद्यप्रबन्धार्थतयावबोधः ।
कथं नु मादृङ्मतिबिम्बितः स्यादथापि भक्त्याहमिहास्मि नुन्नः ॥ २ ॥

हृद्यन्धराविःकृतराममूर्तेस्तथा गुरूणां विपुलप्रसादात् ।
यथा कथञ्चिद् रचितेन विष्णुरनेन तुष्यत्वखिलान्तरात्मा ॥ ३ ॥

इति शङ्कराचार्यकृतोपदेशसाहस्र्याः पदयोजनिका नाम टीका कृष्णतीर्थशिष्यरामतीर्थविरचिता समाप्ता ।

Post-Colophonic: संवत् १८५० आश्विन कृष्ण चतुर्थी ४ सोमवासरे । ग्रन्थसंख्या ५००० । शुभमस्तु ।

## 1553. तत्त्वानुसन्धानम्

OPENING: श्रीपरमात्मने नमः । सच्चिदानन्दो जयतु ।

ब्रह्माहं यत्प्रसादेन मयि विश्वं प्रकल्पितम् ।
श्रीमत्स्वयंप्रकाशाख्यं प्रणौमि जगतां गुरुम् ॥ १ ॥

देहो नाऽहं श्रोत्रवागादिकानि नाहं बुद्धिर्नाहमध्यासमूलम् ।
नाहं सत्यानन्दरूपश्चिदात्मा माया साक्षी कृष्ण एवाहमस्मि ॥ २ ॥

CLOSING: श्रीमत्स्वयंप्रकाशाऽस्मद्गुरुणा करुणावशात् ।
उपदिष्टपरात्मैक्यतत्त्वमावेदितं मया ॥ १ ॥

ब्रह्मेशविष्ण्वादिसमस्तदेवाः स्वस्वाधिकारेषु विभीतचित्ताः ।
आज्ञावशाद् यस्य वसंति सर्वे तं कृष्णमाद्यं शरणं प्रपद्ये ॥ २ ॥

या भारती शिवविरञ्चिविष्णुदेवादिभिर्नित्यमुपास्यामाना ।
सदाक्षमालाविलसत्कराढ्यां वाग्वादिनीं तां प्रणमामि देवीम् ॥ ३ ॥

आकाशपुष्पमिव विश्वमहं निरीक्षे मग्नोऽस्मि नित्यसुखबोधरसामृताब्धौ ।
प्रत्यञ्चमद्वयमनन्तसुखैकबोधं साक्षात् करोमि पदभावनया गुरूणाम् ॥ ४ ॥

यत्पादयुग्मकमलाश्रयणं विनाहं,
संसारसिन्धुपतितः सुखदुःखभाग्भ्याम् ।
यत्पादयुग्मकमलाश्रयणात् सुतीर्ण-
स्तद्देशिकांघ्रिकमलं प्रणतोऽस्मि नित्यम् ॥ ५ ॥

परमसुखपयोधौ मग्नचित्तो महेशं,
हरिविधिसुरमुख्यान् देशिकं देशमात्रम् ।
जगदपि न विजाने पूर्णसत्यात्मसंवित,
सुखतनुरु(र)हमात्मा सर्वसंसारशून्यः ॥ ६ ॥

यदुकुलवररत्नं कृष्णमन्यांश्च देवान्,
न मनुजपशुमृगादीन् ब्राह्मणादींश्च जाने ।
परमसुखसमुद्रे मज्जनात्तन्मयो[ह्रे]-
लितनिखिल[वि]भेदः सत्यबोधैकरूपः ॥ ७ ॥

COLOPHON: इति श्रीपरमहंसपरिव्राजकाचार्य-श्रीमत्स्वयंप्रकाशानन्दसरस्वतीपूज्यपादशिष्य-भगवान् महादेवसरस्वतीमुनिविरचितं तत्त्वानुसन्धानं समाप्तम् ।

Post-Colophonic: श्रीसंवत् १७६५ वर्षे मिती कार्त्तिकमासे गुरुवारः लिखितं मयारामेण स्वयं पठनार्थम् ।

## 1560. पञ्चप्रकरणी

OPENING: श्रीगुरुचरणाभ्यां नमः ।

श्रीरामं सीतया सार्द्धं नत्वा सर्वहृदि स्थितम् ।
सत्सुखानुभवं ग्रन्थं कुर्वे बुद्धिविशुद्धये ॥ २ ॥

CLOSING & COLOPHON: इति पञ्च[प्र]करण्यां आत्मप्रकाशनिरूपणं नाम पञ्चमं प्रकरणं समाप्तम् । श्री काशीविश्वेश्वरार्पणमस्तु ।

पञ्चप्रकरणीमेतां सत्सुखानुभवप्रदाम् ।
विचारयन्ति ये नित्यमात्मारामा भवन्ति ते ॥ १ ॥

इति पञ्च[प्र]करणीयम् ।

अनेन प्रीयतां देवो भगवान् जानकीपतिः ।
श्रीरामचन्द्रपूर्वेषामस्माकं कुलदैवतम् ॥ २ ॥
संकल्परामो विख्यातः पाताले दिवि भूतले ।
अन्तःसुखात्मकं तेन विधेयात्मपदं ध्रुवम् ॥ ३ ॥
श्रीमन्नारायणस्वामी विख्यातो जगतीतले ।
सत्सुखानुभवं शास्त्रं तस्य जानन्तु योगिनः ॥ ४ ॥
इदमात्मगुणोपेतमात्मनैव विनिर्मितम् ।
आत्मज्ञानसुखावा(म्व्वा)थ आत्म(न्ये)व समर्पितम् ॥ ५ ॥

इदं पद्यं बह्वर्थसमन्वितं । इदं सत्सुखाम्बुव्ययं शास्त्रं श्रीइच्छारामस्वामिभिर्विरचितं शिष्यबोधाय । शुभं भवतु ।

Post-Colophonic: संवत् १६१० का चैत्र कृष्ण प्रदि(?ति)पद्यां मन्दे समाप्तिमगमत् । इदं पुस्तकं लिखितम् रामसुखेन स्वपठनार्थम् । श्री ।

## 1569. पञ्चपादिका विवरणान्विता

Ct. OPENING: श्रीगणेशाय नमः ।

पालने विमलसत्त्ववृत्तये जन्मकर्मणि रजोजुषे लये ।
तामसाय जगतः पराकृतद्वैतजालवपुषे नमः सते ॥

यस्याः प्रसादमवलम्ब्य जगद्गुरूणा-
मन्ध(न्तः)स्खलद्बहुगुणाः प्रसरन्ति वाचः ।
सा वेदशास्त्रपरिनिर्मितवंद्यदेहा
भूयात् समग्रवरदैव सरस्वती नः ॥

विघ्नाभितापमपहृत्य मदीयकृत्य-
बीजं प्रवृद्धमदनुग्रहवर्षपातैः ।

संप्रार्थितः सिततरोपि गणेशमेषः
सिञ्चन्नभीष्टफलमङ्कुरयत्वमोघम् ॥

श्यामोऽपि श्रुतिकमलावबोधरागः शान्तः सन्नयति तमोविनाशमन्तः ।
नीरूपं प्रथयति योऽपि गोसहस्रैस्तं व्यासं नमत जगत्यपूर्वभानुम् ।

उद्धृत्य वेदपयसः कमलामिवाब्धे-
रालिङ्गिताखिलजगत्प्रभवैकमूर्त्तिः ।
विद्यामशेषजगतां सुखदामदाद्य-
स्तं शंकरं विमलभाष्यकृतं नमामि ।।

वन्दे तमात्मसम्बुद्धस्फुरद्ब्रह्मावबोधतः ।
अर्थतोऽपि न नात्रैव योऽनन्यानुभवो गुरुः ।।

प्रकाशात्मयतिः सम्यक् प्राप्तविद्यागुरुत्सया(?) ।
यथाश्रुतं यथाशक्ति व्याख्यास्ये पञ्चपादिकाम् ।।

विदितसकलवेद्यैर्नं प्रशंसन्ति लोके
ग्रथितमपि महद्भिः किं पुनर्मादृशेन ।
इति विफलसमेस्मिन् वाग्व्ययेऽहं प्रवृत्तः
स्वमतिविमलतायै क्षन्तुमर्हन्ति सन्तः ।।

प्रारिप्सितग्रन्थस्याऽविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय चाभिलषितदेवतापूजानमस्कारः कर्त्तव्यः शास्त्रार्थश्च तत्वं पदार्थविवेकोपायलभ्यः प्रत्यग्ब्रह्मणोरेकत्वलक्षणः संक्षेपतो दर्शनीयः कृत्स्नस्य भाष्यस्य तत्र तात्पर्यकथनायेति तदुभयं श्रुत्यर्थाभ्यां संक्षेपतो दर्शयति—

अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मने ।
अभूतद्वैतजालाय साक्षिणे ब्रह्मणे नमः । इति

Ct. COLOPHON इति श्रीमत्परमहंसपरिव्राजकाचार्यानुभवपूज्यपादशिष्यस्य प्रकाशात्मभगवतः कृतौ पञ्चपादिकाविवरणे समन्वयसूत्रं समाप्तम् ।

Post-Colophonic : संवत् १५८२ समये आषाढ शुदि ४ शनिवासरे ।

## 1576. ब्रह्मज्ञानम्

OPENING : श्रीगणेशाय नमः । श्रीमहादेवाय नमः ।

श्रीदेव्युवाच—

कैलाशशिखरासीनं देवदेवं जगद्गुरुम् ।
कथं सृष्टिर्भवेद्देवः कथं सृष्टिर्विनश्यति ॥
ब्रह्मज्ञानं कथं देव पश्चात् ज्ञानमुदीरयेत् ।

CLOSING : यदिदं पठितं नित्यं यच्छृणोति दिने दिने ।
सर्वपापविशुद्धात्मा शिवलोकं स गच्छति ॥ १२१ ॥

COLOPHON : इति श्रीमहादेवेनोक्त पार्वती प्रति ब्रह्मज्ञानं समाप्तम् ।

## 1577. ब्रह्मसंहिता-सिद्धार्थसङ्ग्रहः

OPENING: श्रीराधायै नमः ।

ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः ।
अनादिरादिर्गोविन्दः सर्वकारणकारणम् ॥ १ ॥

सहस्रपत्रं कमलं गोकुलाख्यं महत्पदम् ।
तत्कर्णिकारं तद्धाम तदनन्तांशसम्भवम् ॥ २ ॥

CLOSING : धर्मानन्यान् परित्यज्य मामेव भज विश्वसन् ।
यादृशी यादृशी श्रद्धा सिद्धिर्भवति तादृशी ॥ ७१ ॥

अहं हि विश्वस्य चराचरस्य बीजं प्रधानं प्रकृतिः पुमांश्च ।
मया हि तं य इदं बिभर्षि विधेहि त्वमथो जगन्ति ॥ ७२ ॥

COLOPHON : इति श्रीब्रह्मसंगि(हि?)तायां भगवत्सिद्धार्थसङ्ग्रहे मूलसूत्राख्यं पञ्चमोऽध्यायः ।

Post Colophonic : लिखितं पूजारी हरदेवदास गोव्यंदगढमध्ये । पठनार्थं वैसनव श्रीकृष्णकिशोरी चरणदासजी । मिति मागसरवुदि ५ गुरुवासर । संवत् १९०६ का ।

## 1578. ब्रह्मसूत्रम्

OPENING श्रीमते रामानुजाय नमः ।

श्रीवल्लभः कृपासिन्धुः कृपयिष्यति मां यदा ।
तदा नन्दाङ्गनोत्सङ्गलालितः करलालितः ॥ १ ॥

यः सर्वज्ञः सर्वशक्तिः सर्वात्मा करुणाकरः ।
स तु दासे मयि निजे कृपयिष्यति सर्वथा ॥ २ ॥

अथातो ब्रह्मजिज्ञासा ।१। जन्माद्यस्य यतः ।२। शास्त्रयोनित्वात् ।३।

CLOSING : (f. 1) इति श्रीमत्कृष्णद्वैपायनवेदव्यासविरचिते ब्रह्मसूत्रे प्रथमाध्याये प्रथमःपादः ।१।

(f. 2) इति प्रथमे द्वितीयपादः ।

× × ×

संस्कारपरामर्शात्तदभावाभिलापाच्च ।३४। तदभावनिर्धारणे च प्रवृत्तेः । नैतद्-ब्राह्मणो विवक्तुमर्हति समिधं सोम्या हरेति शूद्रत्वाभावनिश्चय उपदेशप्रवृत्तेश्च नाधिकारः, श्रवणाध्ययनार्थप्रतिषेधात् ।३६। स्मृतेश्च कम्पनात् ।३७। ज्योतिर्दर्शनात् ।३८। आका ×××××

## 1579. ब्रह्मसूत्रम् (शारीरकमीमांसा)

OPENING: श्रीगणेशाय नमः। श्रीपरमात्मने नमः।

अथातो ब्रह्मजिज्ञासा ।१। जन्माद्यस्य यतः ।२। शास्त्रयोनित्वात् ।३। तत्तु समन्वयात् ।४। ईक्षतेर्ना शब्दं ।५।

CLOSING: विकारावर्त्तिव[त्]तथाहि स्थितिमाह ।१९। दर्शयतश्चैवं प्रत्यक्षानुमाने ।२०। भोगमात्रसाम्यलिङ्गाच्च ।२१। अनावृत्तिः शब्दात् अनावृत्तिशब्दात् ।२२।

COLOPHON: इति श्रीमच्छारीरकमीमांसाचतुर्थाध्याये चतुर्थः।

Post Colophonic: संवत् १८४८ मिति ज्येष्ठ सुध ५।

## 1592. वेदान्तसंज्ञा

OPENING ॐ श्रीगणेशाय नमः।

श्रीमद्गुरोः पादयुगं नत्वा तस्य प्रसादतः।
वेदान्तसंज्ञाः प्रत्येकं निरूप्यन्ते यथामति ॥ १ ॥

अध्यारोपाऽपवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।

इति वृद्धवचनम् अत्राऽध्यारोपो नाम वस्तुनि अवस्त्वारोपः वस्तुसच्चिदानन्दात्मकं ब्रह्म। अवस्तु—अज्ञानादिसकलजडसमुदायस्वरूपमहाप्रपञ्चः।

CLOSING: संवृते गलविवरे यत्कण्ठनिनादनकरणं स नादः ।१। अनुस्वारो बिन्दुः ।२। नादैकदेशः कलेत्यर्थः ।३। तथा चासंगाद्द्वितीयब्रह्मप्रतिपादके वेदान्तशास्त्रे वृद्धवचनमनुसृत्याऽध्यारोपवशात् संज्ञाः सन्तीति प्रतिपादितं। सम्प्रत्यपवादो निरूप्यते-अधिष्ठानमात्रपर्यवशेषणमपवादः तथा च सर्वप्रपञ्चरहितं ब्रह्माहमस्मीति प्रत्यगभिन्नब्रह्मज्ञानान्न मुक्तिरिति सिद्धम्।

COLOPHON: इति संज्ञाप्रकरणं समाप्तम्।

Post-Colophonic: सम्वत् १९२५ फगुन वदी ४

## 1609. वेदान्तसिद्धान्तसूक्तिमञ्जरी 'प्रकाश'टीकान्विता

OPENING: ओम् श्रीगणेशाय नमः।

तारानाथकलाधरस्त्रिजगतां नाथस्त्रयीविग्रहः
का..............................उतः।
वामाङ्कस्थितशैलजाङ्कसहितं विघ्नाधिपं लालयन्,
सानन्दः शुभदः सदा......................॥

..........तदुरवगाहवेदान्तशास्त्रार्थप्रवेशेन बहुविधसिद्धान्तरत्नसंकलनासमर्था..............................यासेन सर्वसिद्धान्तपरिज्ञानलालसानां मुमुक्षु-

विशेषाणामुपकाराय वेदान्त.......................................प्रत्यूहव्यूहप्रशमनाय प्रथमं साम्बशिवस्पृहणीयं गुणकदम्बहेरम्बमनुसन्धत्ते ।

तरणिशतसवर्णं कर्णघूर्णद्विरेफा-
वलितवलितकपोलो........................।
गिरिशगिरिसुताभ्यां लालितं नित्यमङ्के
स्वजनभरणशीलं शीलये विघ्नराजम् ॥ १ ॥

CLOSING : श्रुतिकल्पलताकुञ्जसञ्जाता सूक्तिमञ्जरी ।
& रम्या राद्धान्तरत्नाढ्या रंजयत्वखिलान् बुधान् ॥ २४ ॥
COLOPHON :

इति श्रीमत्परमहंसपरिव्रा० चार्य श्रीरामचं० सरस्व० पूज्यपादशिष्येण गङ्गाधरेन्द्रस० त्याख्यभिक्षुणा विता वेदां० सू० समाप्त । शुभमस्तु ।

स्पष्टार्थं पद्यम् । इति श्रीमत्प० परिव्रा० श्रीरामसर० पूज्यपा० शिष्येण गङ्गाधरेन्द्रसरस्वत्याख्ययतिना विरचिते वेदान्तसिद्धान्तमञ्जरीप्रकाशे चतुर्थः परिच्छेदः ४ समाप्तः ।

## 1611. वेदान्तसुधा (प्रथमादर्शः)

OPENING : स्फुरतु मम हृदि प्रकाशरूपं वचनमनोऽविषयस्तदात्मतत्त्वम् ।
रचयति यदधिष्ठिता नितान्तं निखिलमिदं हि जगज्जडापि माया ॥१॥

भ्रमणमिह कृतं मया सुखाय क्वचिदपि नाणुरपीप्सितस्य लब्धः ।
कथमपि कृपयेश पादरेणुं तव यदि यामि तरामि शोकपारम् ॥ २ ॥

भ्रमथ किमु बुधा मुधा परत्र पिबत सुधां वसुधातलेपि लब्धाम् ।
मतिमथितविचारसागरेऽस्मिन् भवति यया भववेदनाविनाशः ॥ ३ ॥

CLOSING : विद्वद्भ्यो वसुधां सुधामिव सदानन्दप्रदां योऽददा-
च्छ्लाघन्ते यश[स]स्तति प्रतिदिशं यस्य प्रकामं बुधाः ।

सोऽभूदत्र नरेन्द्रनीतिनिपुणोऽप्यद्वैतनिष्ठापरो,
कुम्भीवृहद्कुलोद्भवो नरपतिः श्रीरामसिंहः प्रभुः ॥ १ ॥

श्रीरङ्गेशपदाब्जभक्तिनिपुणो दक्षः प्रजारक्षणे,
गाम्भीर्यादिगुणाकरः पृथुयशा दीनाऽनुकम्पापरः ।
द्विट्सङ्घाततमोनिषूदनरविः श्रीरामसिंहात्मजो,
वीरः श्रीरघुवीरसिंहनृपतिर्वर्वर्ति सर्वोपरि ॥ २ ॥

तामीश्वरंवास्थितवैष्णवकुलप्रसूतो हरिशर्मनामा ।
व्यधत्त वेदान्तसुधां सुबोधामद्वैतवेदान्तमतप्रधानाम् ॥ ३ ॥

वाञ्छासंसारचक्रभ्रमकं निरस्य बोधं जनयत्यपूर्वम् ।
तां को न सेवेत बुधोऽमृतार्थी दोषानशेषान् विषयेषु पश्यन् ॥ ४ ॥

यस्याऽऽसीज्जन्मकर्त्ता शिवबगससुतो वैष्णवाग्र्येषु मुख्यो,
बुन्दीट्श्रीरामराड्विश्वसनपरममूस्तत्कृपावाप्तसम्पत् ।
व्याकृत्याद्येषु शास्त्रेष्वधिकपरिचयादाप्ततत्त्वार्थबोधः,
श्रीशाङ्घ्रिध्यानदग्धाऽखिलहृदयमलो नानजीरामशर्मा ॥५॥

तत्पुत्रा विद्यायां कृतश्रमा बुन्दीशकृतरक्षाः ।
गणपति-हरि-ग्रामन्नीलाल-जगन्नाथशर्माणः ॥ ६ ॥

शररसनवचन्द्रमिते १९६५ वर्षे माघे सितेऽष्टम्याम् ।
एतद्ग्रन्थसमाप्तिं त्रिषष्टिवर्षो हरिः कृतवान् ॥ ७ ॥

COLOPHON इति श्रीबुन्दीपुरपुरन्दराणां महाराजाधिराजमहारावराजोपपदश्री १०८ श्री रघुवीरसिंहवर्म्मणां पुरोहितेन हरिशर्म्मणा विरचितोऽयं वेदान्तसुधानामको ग्रन्थः समाप्तः ।

अस्मिन्वेदान्तसुधानामकग्रन्थे काशीस्थप्रधानविदुषां सम्मतयः ।

[ १ ]

॥ श्रीः ॥ इयं सुधा मुधापियाऽधिकारिरुग्विनाशिनी ।
कृता हरीतिशर्मणाऽऽदृता प्रज्ञानभिक्षुणा ॥ १ ॥

इयं वेदान्तसुधा किल बूंदीशपुरोहितदाधीचकुलोत्पन्नपेढवाल-नान्हजीरामशर्म-सुपुत्र पं० हरिशर्मणा कृता शारीरकभाष्यादिबृहद्ग्रन्थप्रविविक्षूणां मन्दाधिकारिणां परमाद्वैतप्रकाशिकेति सहर्षं मन्यते ।

श्रीमदूर्ध्वाम्नायकाशीब्रह्मघट्टप्रतिष्ठापितकैवल्यधाममठनिवासी—प्रज्ञानानन्दसरस्वती स्वामी ।

[ २ ]

॥ श्रीः ॥ लेखादृत्यविचारमन्दरमथावेदान्तरत्नाकरं,
स्वालोड्याऽऽहृतगूढतत्त्वपटलीदैयङ्गवीनो हरिः ।
धन्योऽयं बुधबान्धवप्रियकृते चित्रं तदाविष्कृता-
ऽसौ वेदान्तसुधा धिनोतु वसुधा देवानिति प्रार्थ्यते ॥ १ ॥

श्रीदाधीचकुलाब्धिपूर्णशशिना बुन्दीन्द्रविद्वत्सभा-
स्मारः श्रीहरिपण्डितेन रचिता लोकोपयोगार्थिना ।
अद्वैतागमनिश्चितार्थविशदीकारक्षमाऽप्रीणयन्,
मां वेदान्तसुधेति साधु मनुते काशीस्थ-गङ्गाधरः ॥ २ ॥

संवत् १९६६ चैत्रवदि ३ सोमे ।

[ ३ ]

॥ श्रीः ॥ सुधेव वेदान्तसुधाऽभिधाना सञ्जीवयित्री कृतिरुज्ज्वलेयम् ।
संसारहालाहलमूर्छितानां श्रीमद्धरेः शास्त्रिण इत्यवैमि ॥ १ ॥

काशीस्थःशिवकुमारशर्म्ममिश्रः । सं० १९६६ चैत्रकृष्णस्य चतुर्थ्यामियं लिपिः ।

[ ४ ]

॥ श्रीः ॥ पण्डितश्रीयुतहरिजीपुरोहितमहाशयरचतवेदान्तसुधाभिधग्रन्थोऽनेकशारीरकादि-वेदान्तसारसङ्ग्रहरूपः प्रामाणिकोऽतिरुचिरः । एतद्ग्रन्थाध्ययनेन छात्राणामनधीता-ऽशेषग्रन्थेषु व्युत्पत्तिरनायासेन सम्पत्स्यत इति परामृशति काशीस्थः सुब्रह्मण्यशास्त्री ।

१९६७ संवत् वैशा० कृ० ३ बुधवासरे ।

[ ५ ]

॥ श्रीः ॥ श्रीबुन्दीनगरीश्वराऽऽश्रितहरिप्राज्ञेन भूरिश्रमं

कृत्वा लोकहिताय साधु घटिता वेदान्तसारैरियम् ।

यां वेदान्तसुधा धिनोति नितरां सार्थेति सम्मन्यते

तैलिङ्गोपपदोऽविकाशिनिवसन्श्रीरामशास्त्री शुभम् ॥ १ ॥

वैशाखसुदि ५ शुक्रे संवत् १९६७ ।

[ ६ ]

॥ श्रीः ॥ श्रुत्यादीन्यवलम्ब्य महता श्रमेण रचितोऽयं वेदान्तसुधानामको वेदान्तप्रकरणग्रन्थः वेदान्तशास्त्रं प्रविविक्षूणां वेदान्तसिद्धान्तं बुभुत्सूनां चाऽतीवोप-कारकः विदितवेदान्तसिद्धान्तानां मनसन्तोषकरश्चेति मनुते पर्वतीयपन्तोपनामक नित्यानन्दशर्मा । शुभम् ।

वैशाखशुक्ल १० दशम्यां बुधवासरे संवत् १९६७

[ ७ ]

श्रीः ॥ अयं किल श्रीयुतबुन्दीपुरपुरन्दरपुरोहितदाधीचकुलावतंसैः परममाननीय-शमदमादिसम्पन्नश्रीहरिशर्मपण्डितवरैः विनिर्मितः शारीरकादिनिबन्धेभ्यो वेदान्तरहस्य-निर्णयायासासहिष्णूनां वेदान्ततत्त्वजिज्ञासूनामतीवोपकारको विद्वज्जनमनस्तोषाधायको वेदान्तसुधानामकग्रन्थोऽध्ययनप्रवचनादिकार्येषु विश्वास्यार्ह इति निर्द्धारयति नागेश्वरपन्त-धर्माधिकारीति शम् ।

संवत् १९६७ वैशा० शु० ११ गुरौ ।

## बुन्दीस्थपण्डितानां सम्मतयः

[ ८ ]

सतां मता सुधात्मको हिताऽहितावबोधिनी,

स्थिता प्रतापखण्डिनी युता शताधिकैर्गुणैः ।

सता कृता हरिप्रभावताऽद्भुताधमान्तिभि-

र्दृढावृता विराजतां कुतापशान्तिहेतवे ॥ १ ॥

क्रमाकथमान्यगुम्फिता समा समासपद्धतौ,
प्रमातृमालयावृताऽनुमाऽऽगमानुगा सुधा ।
भ्रमापमाननक्षमा क्षमासमाधिमौनिता,
शमाविभावबोधिनी प्रमाणमानविरस्त्वसौ ॥ २ ॥

परावरादिसेविते परावरावबोधके,
धरासुरावृते मते नरानुरागदा सुधा ।
पुराणराजिसम्मता पुरापराधनाशिनी,
गिरा परा गुणोज्ज्वलतरा विराजतां भुवि ॥ ३ ॥

सदा मुदावहा सुधा छिदाभिदां वितन्वती,
वदावदालिसम्मता सदार्तिवारणक्षमा ।
विदाऽऽपदां निवारिणी भिदाच्छिदा विनोदिनी,
मदावधानदास्तु सा सुदान्तिदानसादरा ॥ ४ ॥

उदधरदधुना सुधां बुधाग्र्यो हरिरतुलां सुविचारसागराद् याम् ।
धरणिसुरवरा निपीयतां द्राग् भजत मुदं विबुधाधिकामिहैव ॥ ५ ॥

अद्वैतमतजिज्ञासुबालबोधोपयोगिनी ।
सुगमा निगमान्तार्थज्ञापने भासते सुधा ॥ ६ ॥

लक्ष्मीकुमारताताचार्यः सम्मतिमदात् सुधां वीक्ष्य ।
नगरसनवचन्द्राब्दाऽऽषाढशितिप्रतिपदि प्रेम्णा ॥ ७ ॥ श्रीः

[ ९ ]

श्रीवेदान्तसुधाकृतिर्विजयते तत्त्वावबोधक्षमा,
मायावादमतान्धकारशमने चन्द्रायमाणा भृशम् ।
सच्चक्रस्य रतेर्विशेषविषयीभूता नितान्तं गुणै-
र्युक्ता श्रीहरिशास्त्रिभिर्विरचिता लोकोपकारव्रता ॥ १ ॥

याऽसारसंसारतमःप्रसारविदारणे सूरसमप्रभावा ।
सुधावृता या वसुधासुधा चेत्यहो मुदे नेयमुदेतु कस्य ॥ २ ॥

तां श्रीहरिशास्त्रिकृतां काशीस्थितभूरिसूरिभिश्च नुताम् ।
को नु कृती नो मनुतां स्वान्तान्तस्तिमिरनाशने प्रथिताम् ॥ ३ ॥

पद्यत्रयीमिमां तस्या गुणपीयूषलम्पटः ।
बुन्दीनिवासी व्यतनोन्माथुरो रामवल्लभः ॥ ४ ॥ श्रीः

[ १० ]

ख्यातश्रीहरिरिह निर्मले कुलेऽस्मिन्,
लब्धजन्मे धरणिसुरोपकारजन्मा ।
स श्रीमान् सपदि विचारसागराब्धि,
निर्मथ्याऽलभत सुधामवाप्यहेतुम् ॥ १ ॥

दाधीचदामबाराख्यः शिष्यस्तस्य हरेरहम् ।
तदीयकृपयैवात्र ग्रन्थे सम्मतिदोऽभवम् ॥ २ ॥

[ ११ ]

श्रीनन्दनन्दनपदाम्बुजचञ्चरीकै-
दाधीचवंशमुकुटैर्हरिशर्मविज्ञैः ।
संसारवारिधिमहोर्मिनिपीडितानां,
हेतोस्तरिर्विरचिता रुचिरा सुधेयम् ॥ १ ॥

विरच्य वेदान्तसुधामनल्पधाल्यशतैवात्र न पण्डितेषु ।
स्फुटीकृता किंतु तथैव सार्द्धं परोपकारप्रियतापि पूर्णा ॥ २ ॥

सुधां विधातुर्विबुधोऽस्य शिष्यो बुन्दीवराऽऽखण्डलनायवान् यः ।
स श्रीनिवासो व्यलिखत् स्वकीयं भावं नगाङ्काङ्कमहीमितेऽब्दे ॥ ३ ॥
ज्येष्ठशुक्लाष्टम्यां कृतिरियम् ।

[ १२ ]

बुन्दीट्पुरोधोहरिशर्मनिर्मिता मुमुक्षुलोकोपकृतौ सदोद्यता ।
या सेविताऽपाकुरुते मुधाभ्रमं सुधा बुधानां मुदमादधातु ॥ १ ॥

विचाराब्धेः समुद्धृत्य सुधां हरिरिहाऽऽतनोत् ।
तां निपीयाऽमरोप्यक्षणा मत्तोऽमनुत सुन्दराम् ॥ २ ॥

मुनिरसनन्दधरामितविक्रमवर्षे शुचौ मासे ।
कृष्णदले मुनितिथ्यां चन्द्रजवारेऽमरो व्यलिखत् ॥ ३ ॥ श्रीः

[ १३ ]

ममथ्य वेदान्तविचारवार्द्धिं कृपया बुधैः श्रीहरिभिर्हृता या ।
सुधा दधातीह मनः सुमोदं सुधाकरादप्यधिकं सतां सा ॥ १ ॥

वेदीजङ्करशर्मा बुन्दीनाथं समाश्रितः क्ष्मापम् ।
गिरिरसनन्दक्ष्माब्दे श्रीहरिशिष्योऽकृत श्लोकम् ॥ २ ॥

[ १४ ]

यद्यं तसिद्धान्तनिरूपकाणि समस्त शास्त्राणि कृतानि सद्भिः ।
बुन्दीशदाधीचहरिप्रणीता हिताय वेदान्तसुधा सुधैव ॥ १ ॥
यतो हृत्पावन सुधास्सुधाभिधामधत्तकं या धरणीतलेपि ।
इत्याह्वयस्य दधीचिगोत्रजो श्रोतृर्बोऽयं चिततोहं बाहुः ॥ २ ॥

[ १५ ]

दाधीचान्वयभूषणो द्विजवरो बुन्दीन्द्रमान्यो हरि-
र्मीमांसात्मविवेकमाहृतरसः श्रीकृष्णसेवापरः ।

अद्वैतश्रुतितत्त्वबोधनपरां संसारतापापहां,
यां वेदान्तसुधां व्यधात् सुखतु सा विद्वज्जनानां मुदम् ॥ १ ॥
दाधीचान्वयसम्भवो बुधजनानां पादसेवारतो
मालोध्योपपदः सुधीगणमुखः श्रीनन्दरामात्मजः ।
बुन्दीसंवसथः सुधारसपिबोऽहं वैजनाथाह्वयः,
पेयेयं सुलभा सुधा भुवि बुधैरित्यर्थये सर्वदा ॥ २ ॥

[ १६ ]

दाधीचान्वयभूषणेन विदुषा लोकोपकारार्थिना,
श्रीवेदान्तसुधा कृतातिमधुरा संसारकष्टच्छिदा ।
वेदान्तार्णवसंहृता हितकरी नौकेव या भूतले
तां वेदान्तसुधां प्रपश्यत बुधा इत्यर्थयेऽहं सदा ॥ १ ॥

विद्वज्जनाग्रगण्योऽयं श्रीहरिः कृतवानिमाम् ।
मास्तु तु विद्वज्जनमुदे भूतले सुलभा सुधा ॥ २ ॥

बुन्दीनिवासी-भट्टोपपददाधीचरामवल्लभशर्मणः कृतिरियम् ।

[ १७ ]

पुराऽमृतं यः स्म ददाति सिन्धुं,
हरिर्मथित्वा कृपया बुधेभ्यः ।
उद्भूय दाधीचकुले स एव,
सुधां विनिर्माय ददौ बुधेभ्यः ॥ १ ॥

केचित् सुधां चन्द्रमसि ब्रुवन्ति,
केचित् प्रियाणामधरोष्ठनिष्ठम् ।
अहं पुनः श्रीहरिसूरिनिर्मितां
सुधां सुधेति मृषा न वच्मि ॥ २ ॥

दाधीचकुलोत्पन्नलक्ष्मीनारायणभट्टस्य कृतिः ।

## 1625. संक्षेपशारीरकं सुबोधदीपिकान्वितम्

OPENING : (f. 4) × × × कथमद्वयत्वमित्यत्राह—प्रक्षीणेति । प्रक्षीणो ज्ञानवा......नाया काशादिका...विकारविभागो यस्येति पदार्थद्वयं संशोध्य वाक्यार्थमाह...एकमिति अद्वितीयं चिन्मात्रमित्यर्थः । ननु ज्ञाननिदाघपुनरुक्तशब्दाख्येयत्वात् कथमेकरसतेत्यत्राह चैतन्येति जडविरोधित्वादिर्निमित्तभेदाद्याथार्थ्यो मा...इति वचनैक...प्रवृत्तिर्वस्तुतः चैतन्यमात्रमेव पारमार्थिको निजस्वभावो यस्येत्येतादृशं तदित्यर्थः । वक्ष्यते हि...वै येशेनाणुमात्रोपि भेद इत्यादिना ॥ ३ ॥

CLOSING : अविरलेति । अविरलपदपंक्तिरियं भारतीपद्मनाभस्य चरणधूलिग्राहिणी सती श्रोतृ-

संधाच्छ्रेयस उपधातं माष्णु इत्यन्वयः । ग्रन्थस्य साम्प्रदायिकत्वं दर्शयितुं गुरोरात्मनश्च नाम निर्दिशन् ग्रन्थोत्पत्तिसमयं कथयति—श्रीदेवेश्वरेति ।

समाप्तौ भगवन्नमस्काररूपं मंगलमाचरति—भुजंगममिति । शुभसम्प्रदायभणितीरनुसृत्य मतं च रामतीर्थगुरोः ।

एतत्प्रबन्धं......व्याकारि मया प्रयत्नेन ।
इयं संक्षेपशारीरसुखबोधनदीपिका ।
मन्तस्तमः प्रशमनी सद्भिः स्नेहेन पूर्यताम् ॥

COLOPHON : इति श्रीमत्परमहंसावतंसश्रीरामतीर्थमुनिशिष्याग्निचित्पुरुषोत्तममिश्रकृतौ संक्षेपशारीरकसुबोधन्यां चतुर्थोऽध्यायः । समाप्ता चेयम् ।

श्रीविश्वेशपदद्वन्द्ववन्दनं शं ददातु नः ।
न चात्रातीवकर्त्तव्यं दोषदृष्टि......नः ॥
दोषोऽप्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ।
निर्दोषत्वैकत्वात् स त्वं क्व बालो कस्य दृश्यते ॥
सापवादावतः कश्चिन्मोक्षस्वर्गावपि प्रति ।

## 1648. पञ्चधाटीटीका

OPENING:

श्रीगणेशाय नमः ।

श्रीमदर्थैश्चिल्पकदणादिसकलकल्याणगुणसिन्धुरणिमाद्यष्टसिद्धिनायको भगवाननेकशीर्षाः वैनाशिकचार्वाकादिविनश्यमानवेदमार्गोद्घाटनहरि श्रीशङ्करभाष्यप्रवृत्तौ सत्यपि श्रीमद्भगवद्दासानुरञ्जकवैष्णवगुणवर्णनहरिसेवाप्रधानककैवल्याद्यखिलार्थदायकनित्यमुक्तगरुडविष्वक्सेनसनन्दनादिहृदयानन्दकरं भागवतपथं प्रवर्त्तयिष्यन् श्रीरामानुजार्यरूपो वभूव तं भगवत्प्रपन्नजनवत्सलमाचार्यं कश्चित् स्वमार्गानुकूलशिष्टाचारभावनारसिकस्तद्वीर्यरूपगुणवर्णनेन स्तौति । पाखण्डेति पञ्चभिः ।

CLOSING :

श्रीमत्सौशील्यवात्सल्यगुणानामाकरस्य च ।
जयपत्तनेऽधुना राधागोविन्दस्य महात्मनः ॥
दासेनेयं कृता व्याख्या पञ्चधाट्या ह्यविस्तरात् ।
संशोध्यतां च भवता दोषो मा मा प्रदीयताम् ॥
श्रीहरिभक्तबालोत्साहार्थम् ।

## 1653. विरोधपरिहारः

OPENING:

श्रीमते रामानुजाय नमः ।

श्रीमद्वेंकटनाथार्यनन्दनो नमयाम्यहम् ।
शेषशायिपदाम्भोजशेषस्वज्ञाननिर्मलान् ॥ १ ॥
आविष्कृतः श्रुतिगणैरविरोधवृत्त्या
काले कदा विरचयन् रजनौ दिवापि ।

भूर्त्तं भुजङ्गमविहङ्गमभूपतिभ्यां
पावाम्बुजं दिशतु पाण्डवसारथिर्मे ॥ २ ॥

ऊरीकृत्य तु लक्ष्मणार्यपृतनासन्तानसन्तावसाम्,
पृथ्वीनिर्जरतल्लजानुपनिषत्सिद्धान्तबद्धाशयान् ।
मन्यानप्यरविन्दलोचनदयाविन्यासधन्या वयं,
तूलायापि तृणाय वा न च तुषच्छेदाय मन्यामहे ॥ ३ ॥

अहं खलु लक्ष्मणाचार्यः सिद्धान्तनिष्णातविष्णुभक्तजननासीरवीरः शुनासीर पुरोहितसदृशमपि परपक्षपातिनमन्ययन् अनन्यथासिद्धगुरुभक्तिप्रभावपरिणतपरमभक्त्युपलभ्यमानसभ्याभिधेयवचनो वरदाचार्यः, पङ्कजनाभपादारविन्दमकरन्दमधुकरायमाणमानसंधर्मसम्प्रदायवर्त्तिनो व्यवस्थापनसंतोषितसर्वाचार्यैः श्रीमद्वेदान्ताचार्यैरस्मत्तातपादैः अगस्त्यभाषया प्रणीतमध्यात्मविद्भिरवधार्यं रहस्यत्रयसारार्थविरोधपरिहारमशेषदेशवासिनामपि परशेषत्वज्ञानरसिकानां संग्रहणसिद्धये सोपबृंहणनिपुणनिरूपितनिगमसंवादसंस्कृतया संस्कृतभाषया सम्यगनुकथयामि ।

CLOSING : इत्थं हैतुकसम्प्रदायपदवीनिष्णातविद्वद्द्विषां,
ग्रीवाभङ्गमिवातनोद्धि वरदाचार्यो विचार्य स्वयम् ।
शङ्काशङ्कु विधूननं शतमिदं शान्ताशयप्रीतये,
श्रीमल्लक्ष्मणयोगिराजविजयप्रस्थानचंत्रध्वजः ॥ १ ॥
मुक्ति शिष्यकरस्थयामि मुरभिद्भुक्ति व्यवस्थापये,
तद्भक्तेषु च कारयामि नियतां भक्ति समस्तं जनम् ।
राजन्यानपि रञ्जयामि समये रामानुजार्योक्तिभिः,
सर्वारीनपि साहसेन विजयी धिक् चर्करीमि क्षितौ ॥ २ ॥

COLOPHON : इति विरोधपरिहारे चतुर्थोऽधिकारः । सम्पूर्णोयं ग्रन्थः ।

Post-Colophonic : संवत् १८४३ फाल्गुनमासे कृष्णपक्षे नवमीरविवासरे लिखितः । श्रीपरमात्मने नमः ।

## 1675. ब्रह्मसूत्राणुभाष्यमरीचिकावृत्तिः

OPENING : श्रीगोपीजनवल्लभाय नमः ।

तृतीयेऽध्याये साधनानां विचार्यमाणत्वात् साधनेष्वन्तरङ्गत्वात् प्रथमं अधिकारिणः पञ्चाग्निप्रक्रमेण जन्म विचार्यते । तत्र ब्रह्मज्ञानोपयिकशरीरान्तरनिष्पत्तये अस्माच्छरीरात् केवल एक जीवो निर्गच्छति संस्कृतभूतसहितो वेति संशयः ।

CLOSING : सत्कृष्णोवर्यसिद्धान्तं प्राप्य व्रजनाथभट्टेन ।
अणुभाष्यभास्करस्य मरीचिकेयं कृता जयतात् ॥ १ ॥

COLOPHON : इति श्रीब्रह्मसूत्राणुभाष्यानुसारिवृत्तौ मरीचिकाख्यायां चतुर्थाध्यायस्य चतुर्थःप्रकरणः । समाप्तश्चतुर्थोऽध्यायः श्रीरस्तु ।

## 1679 विद्वन्मण्डनटीका

OPENING: (f 2) × × × ते सति कमलप्रकाशो जायते तथा प्रभो प्रकटे सति हरिरतिमार्ग-कमलप्रकाशो जायते। श्रुतिसूत्रेति। विट्ठलः सुधीः विद्वन्मण्डनं कुरुते। अन्यदपि मण्डनं मणिभिर्जटितं इतीदं मण्डनं श्रुतिमत्वादिभिर्मणिभिर्जटित। अन्यदपि मण्डनं मौक्तिकैर्ग्रंथितं। इदं मण्डनं युक्तिमौक्तिकैर्ग्रंथितं। युक्तीनां मुक्तासादृश्यत्वेन निर्दोषत्वं व्यज्यते।

CLOSING: न पीति। प्रकारास्वरूपोपि वन्हिर्वक्तुं न शक्यते, उष्णजले प्रकाशानुलम्भात्, अग्नेर-भावप्रसङ्गात्। किञ्चेति। सः जीवः यस्मिन्काले इतः शरीरात् ऊर्ध्वं क्रामति।

## 1684 सन्न्यासनिर्णयः

OPENING: य(प)श्चात्तापनिवृत्यर्थं परित्यागो विचार्यते।
स मार्ग(र्गो) द्वितीयं(यः) प्रोक्तो भक्तौ ज्ञाने विशेषतः॥ १॥
कर्ममार्गेण कर्त्तव्यः सुतरां कलिकालतः।
अत आदौ भक्तिमार्गे कर्त्तव्यत्वाद् विचारणात्॥ २॥

CLOSING: इति कृष्णप्रसादेन वल्लभेन विनिश्चितम्।
सन्न्यासवरणं भक्तावन्यथा पतितो भवेत्॥ २२॥

COLOPHON: इति श्रीवल्लभाचार्यविरचितं सन्न्यासनिर्णय समाप्तम्।

## 1685 सन्न्यासनिर्णयः सटीकः

Ct. OPENING श्रीकृष्णाय नमः। श्रीवल्लभाचार्यचरणकमलेभ्यो नमः। श्रीविट्ठलचरणकमलेभ्यो नमः।

अथ श्रीगोपेशजीकृत सन्न्यासनिर्णयटीका लिख्यते।

विविधविरहभावावेशजक्लेशभाजा-
मनुभवविषयः सन् गोपिकानां कृपाब्धिः।
कलयति निजरूपानन्दपीयूषपानं,
सकृदपि स कृतार्थं मां प्रसन्नः करोतु॥ १॥
श्रीगोपिकाधीशपथानुगानां सेवाकथासक्तिसमर्पणाय।
य एक एवास्ति विभुस्तमेव श्रीवल्लभाख्यं मुहुराश्रयेऽहम्॥ २॥
श्रीमद्वल्लभसूनोः श्रीविट्ठलनामधेयस्य।
पदकमलद्वयममलं मनसि मदीये समुल्लसतु॥ ३॥
स्वाचार्यचरणपङ्कजपरागपुञ्जरागरक्तपरभागान्।
अभिवन्दे पितृचरणानहमतिभक्त्या तदाप्तमतिः॥ ४॥

CLOSING: श्रीविट्ठलेशचरणाब्जयुगानुभावी-
कल्याणरायतनयेन मुदा विचार्य।

गोपेश्वरेण विहिता विवृतिर्वितन्यात्,
सन्न्यासनिर्णय इदं विदुषां विनोदम् ॥ १ ॥

COLOPHON: इति श्रीगोकुलाधीशपदसरसिजसेवापयप्रवर्त्तकश्रीवल्लभाचार्यचरणाब्जरेणुधारण-श्रीकल्याणरायात्मजश्रीहरिरायानुजश्रीगोपेश्वरविरचिता सन्न्यासनिर्णयविवृतिः ।

## 1686. सन्न्यासनिर्णयविवरणम्

Ct OPENING: श्रीकृष्णाय नमः ।

स्वाचार्यवर्यचरणोदितभक्तिमार्ग-
प्रारम्भकालिकजनस्यजनप्रकारम् ।
सन्न्यासनिर्णयमयं विवृणोति दासः,
श्रीबालकृष्णपदपद्मनिवेशितात्मा ॥ १ ॥

Ct. CLOSING: भगवता सन्न्यासस्य स्फोरणादेवाचार्यैस्त्रिदण्डसन्न्यास एव कृतः मार्यादिभिराज्ञायाः । प्रदाने स्वपर्णशालाज्वालनं प्रदश्य तैर्निर्गच्छत शीघ्रं निर्गच्छतेत्युक्ते कारककौपीने गृहीता निर्गताः, ततो ग्निरपि शान्तः । ततो यथाविधिसन्न्यासं गृहीत्वा ग्ररेलग्रामात् काश्यामागताः । मासमात्रं चानशनं कृतम् । दिनाष्टकं च मौनव्रतं, तेन पूर्वाज्ञाद्वयस्यदेश-देहत्यागौ पाक्षिकदोषपरिहारेण कृतौ । तत आषाढशुक्लद्वितीयायां सिद्धिं गता इति प्राचां वाक्यादवगम्यते ।

कर्मोपसंहृतिगतश्रुतिसूत्रगं यद्,
यद्बोधितं भगवता निजभृत्यमुख्ये ।
यच्चेतरत्तदनुसृत्य च वाक्यजातं
सन्न्यासनिर्णयमयं व्यवृणोत्तदीयः ॥ १ ॥

Ct. COLOPHON इति श्रीवल्लभाचार्यचरणैकतानपीताम्बरात्मजपुरुषोत्तमविरचितं सन्न्यासनिर्णयविवरणं सम्पूर्णम् ।

Post Colophonic: मिति श्रावणसुदि ६ संवत् १९१६- ग्र० ५५० ।

## 1697. सिद्धान्तरहस्यविवृतिः

OPENING: (f. 3) × × × प्रशब्दो ऽत्वा अत्रोक्तिः केवलकृपयैवाविर्भूय नत्वाचार्यप्रार्थनयेति ज्ञापनाय प्रशब्दोपादानम् । साक्षाद् भगवद्वाक्यकथनं सर्वेषां सम्यक् हृदयारूढं न भवतीति तस्माद् वाक्यार्थ एव । यथा सम्यक्हृदयारूढो भवति तथा पद्यबन्धेन कथनं प्रतिज्ञानते । तदक्षरश उच्यत इति ।

CLOSING: भक्तिसिद्धान्तवाक्यानां श्रुतानां भगवन्मुखात् ।
स्वाचार्यैःपद्यबन्धानां स्वीयानां बोधसिद्धये ॥ १ ॥

व्याख्यानं कृतमाचार्यपदपद्माभिधेन मे ।
स्वाचार्यास्तेन तुष्यन्तु मयि निःसाधने स्वतः ॥ २ ॥

COLOPHON: इति श्रीपितृचरणैकतानश्रीगोकुलनाथजीविरचिता सिद्धान्तरहस्यविवृति सम्पूर्णम् ।

श्रीवल्लभाचार्यपदाम्बुजाते यदि प्रभाते स्मृतिवर्त्म याते।
चेतः पुनाते विपदं लुनाते श्रेयस्तदा ते सकलं ददाते ॥ १ ॥

## 1706. तत्त्वयाथार्थ्यदीपनम्

OPENING: श्रीपरमात्मने नमः।

पञ्चविंशतितत्त्वेषु तत्त्वज्ञानमवाप्तवान्।
आदिसृष्टौ नमस्तस्मै कपिलाय महर्षये ॥

अथातस्तत्त्वयाथार्थ्यं व्याख्यास्यामः इति। कश्चिद् ब्राह्मणस्त्रिविधेन दुःखेनाभिभूतः सांख्याचार्यं कपिलमुनिं शरणमुपागतः। अथ कुलगोत्रनामस्वाध्यायं निवेद्याह—भगवन्! किमाहु परं याथार्थ्यम्? किं ज्ञात्वा कृतकृत्यः स्यात्? कपिल उवाच।

CLOSING: कृतं परोपकाराय तत्त्वयाथार्थ्यदीपनम्।
तेन मे प्रीयतां कृष्णः परमात्मा जगद्गुरुः ॥ १ ॥
स्वतन्त्रत्वात् स एवैकः कर्त्ता गोपालबालकः।
श्रीकृष्णाख्यो महेशानो दारुयन्त्रसमस्त्वहम् ॥ २ ॥
पुराणार्थं बुभुत्सुना बोधायैव मयेरितम्।
तेभ्यः समर्थितं चैतत् तेनापि प्रीयतां हरिः ॥ ३ ॥

COLOPHON: इति भावविश्वनाथदीक्षितसूनुगणेशकृतं तत्त्वयाथार्थ्यदीपनं सम्पूर्णम् ॥ १ ॥

## 1720. वेदान्ततत्त्वबोधः

OPENING: श्रीगणपतये नमः। श्रीसुदर्शनाय नमः।

कश्चिन्नितो हरति ध्वान्तमशेषमन्त-
र्बोधप्रदस्तरणिकोटिसमप्रभो वै।
यो ज्ञानवादविभवां हि ददाह काशीं
तं श्रीसुदर्शनमहं हृदि चिन्तयामि ॥ १ ॥

COLOPHON: इति श्रीसनत्कुमारसारबसम्प्रदायप्रवर्त्तकाचार्यश्रीभगवन्नियमानन्दानुयायिना-नन्तरामे(गे)ण रामेण विरचितं वेदान्ततत्त्वबोध समाप्त।

Post-Colophonic: संवत् १६२१ का मिति भाद्रवा शुक्ल पक्ष २ शुक्रवार।
श्लोक—दक्षिणा द्विजवर्येभ्यो दत्वा स्नानत्रिर्वैष्णवान्।
संतोष्य शुद्धभावेन सूतमागधबन्दिना ॥
इति नारदपञ्चरात्रे चत्वारिंशत्तमपटले। हस्ताक्षर ललताप्रसादव्यास पारीक का।

## 1721. वेदान्तसिद्धान्तसङ्ग्रहः सटीकः

OPENING: श्रीहयग्रीवाय नमः।

गोप्यावद्ध उलूखलेऽनिजवशो व्याधन्न नीतिं निजा-
मित्यनुम् रक्षकमात्मनश्चपलदृग् बन्धं विमोक्तुं द्रुमौ।

योऽभांक्षीन् मुनिभाषितं सुविशदं ब्रह्मादिभिः केवलं,
चित्तेनैव विशोधितेन विदितोऽप्यानन्दसूनुः स नः ॥ १ ॥

श्रीमद्व्रास्यकृतो वन्दे टीकाकृतस्तथा सतः ।
तदुच्छिष्टं हि संगृह्णन्नाच्छेयं पूज्यतां सताम् ॥ २ ॥

संग्रहेणोदिता येऽर्थाः कारिकाभिः सतां मुदे ।
वैशद्यं क्रियते तेषां सुबोधाय हि कौतुकात् ॥ ३ ॥

नत्वा श्रीगुरुपादाब्जं क्रियते वनमालिना ।
संतोषाय मुकुन्दस्य श्रुतिसिद्धान्तसंग्रहः ॥ ४ ॥

अथ निर्विघ्नग्रन्थसमाप्तिकामनया कृतं विशिष्टेष्टदेवतास्मरणरूपमङ्गलं शिष्य-शिक्षार्थं ग्रन्थादौ निबध्नाति—श्रीरिति ।

श्रीरचलोरसि भाति यदीये गोर्वदने प्रचलास्त्यनवद्या ।
ब्रह्मशिवेन्द्रमनोभिरगम्यो वाजिमुखोऽवतु नः स हि विष्णुः ॥ १ ॥

CLOSING:

मायाविचित्रशक्तिः स्यादिन्द्रस्त्वीयते पुरुः ।
अवतारादिरूपेणान्तर्याम्यादितया तथा ॥ २६३ ॥

ननु इन्द्रो मायाभिः पुरुरूप ईयत इति श्रुत्या ब्रह्मणो बहुभवनोक्त्या विश्वास्य मिथ्यात्वं तत्राह मायेति मायां च प्रकृतिं विद्यान्मायिनं च महेश्वरमिति श्रुतेर्मायावि-चित्रशक्तिस्तस्यैकोप्यवतारान्तर्यामित्वादिना बहुधा प्रतीयते हरिः ॥ २६० ॥

भगवतोऽङ्घ्रिकञ्जस्य श्रीगोपालस्य रेणवः ।
क्रियासुर्वैभवं वाचामघराशेश्च शोधनम् ॥ १ ॥

भुक्त्वा श्यामाकमुष्टिं विपदमदमयहीनबन्धुद्विजाते-
र्दत्त्वा भूती पराः स्वाधृतकर इति मा देहि मां पद्मया यः ।
द्रौपद्याः शाकलेशात् त्रिभुवनमपुषद्यस्त्वनां दुःप्रसाद्यो,
वाक्यानां संग्रहाम्मे भवतु मुररिपुः कारितात् स्वेन तुष्टः ॥ १ ॥

श्रीगोविन्दविहारभूषितभुवो वृन्दावनात् प्राग्दिशि,
क्रोशानां त्रिपु(षु)गै पुरे मुनिभरद्वाजीयवंशोद्भवाः ।
श्रीशम्भाहमुचो वसन्ति विबुधो वर्णो हृषभूस्तत्कुले
सम्पूर्णः श्रुतिसंग्रहो विरचितो यस्तेन कृष्णेच्छया ॥ ३ ॥

COLOPHON: इति श्रीवेदान्तसिद्धान्तसंग्रहे श्रीवनमालिविरचिते षष्ठोऽध्यायः ।६। समाप्तोऽयं ग्रन्थः ।

Post Colophonic: वन्दे श्रीवनमालिदासपदयोर्युग्मं श्रुतीनां चयं,
येनालोड्य हृयकारि कृष्णपदयोर्ध्यानैकतानं मवः ।
मायावादिशि(शि)रस्सु येन निहिता भक्तेन होपानहो
यद्ग्रन्थेषु निधाय बुद्धिमतुलां प्राप्तस्तदीयां गतिम् ॥ १ ॥

पुस्तकं लिखितं ह्येतत् ब्राह्मणेन सुबुद्धिना ।
चतुर्भुजेन वृन्दाया वने गोविन्दसेविते ।।

श्रीरामाय नमः ।

## 1729. अन्तकृद्दशाङ्गसूत्रम्

Post-Colophonic: संवत् १५९८ वर्षे भाद्रवावदि १ चं(द्र)वारे । पूर्वभाद्रपदनक्षत्रे सुभनामा योगात् रणथंभदुर्गात् शरजाणीखाणखाणा राज्य प्रवर्त्तते । लिखितं पूज्य श्रीधनसागरशिष्यानुशिष्य समयसाग[र] लिखितं । सुभं भवतु । श्री स्यात् लिखकपाठकयो ।।

## 1733. अनुत्तरोपपातिकदशाङ्गसूत्रम्

Post-Colophonic:

श्रीमदणहिल्लपत्तननगरे श्रीवीरवंशसम्भूतः ।
श्रेष्ठीधनपालाख्यः समभूद्विख्यातकीर्तिभरः ।। १ ।।

तत्पुत्रः कुम्पाख्यस्तत्पुत्रो देवडाभिधः प्रथितः ।
तत्पुत्रौ सङ्घाधिपभोलायमुणाभिधौ विदितौ ।। २ ।।

भोलाख्येन श्रीमत्संघाधीशेन सुवित्तवित्तेन ।
भांभूनाम्न्या दयितया सहितेन प्रौढविरीन ।। ३ ।।

श्रीजैनबिम्ब.................................

## 1756. ज्ञाताधर्मकथाङ्गसूत्रम्

Post-Colophonic. संवत् १४८३ वर्षे । पुस्तिका लखिता । मंगलम् ।

( In a different hand writing )

आस्ते प्रवीण(:) प्रथितप्रशंसः प्राग्वाटसद्वंशमणीवतंसः ।
नायाभिधः साधुरबाध्यबुद्धिः प्राप्तप्रसिद्धिः परमास्तिकेषु ।। १ ।।

यः श्रीपत्तननगरे वसन् सुरत्राणलब्धबहुमानः ।
विषमतमेपि हि समये श्रीधर्माधारतां भजते ।। २ ।।

यः स्वात्मानं सततमनाविधधर्मकर्मनिर्मितिभिः ।
स्वगुणोद्भववयशोभिस्तथा धरित्रीं पवित्रयति ।। ३ ।।

सधर्मचारिणी तस्य नित्यं सद्धर्मचारिणी ।
कडीरित्याख्यया ख्याता विख्याता स्वगुणश्रिया ।। ४ ।।

तयोः पुत्री पवित्राङ्गी पात्रं सद्गुणसम्पदाम् ।
अस्ति प्रशस्तचेतस्का चाहीरित्यभिधानतः ।। ५ ।।

श्रीदेवगुरुसद्भक्तिसरस्यां हंसिकेव या ।
पुण्यपयरसास्वादमाददाना विराजते ।। ६ ।।

सा चाहीः श्राविकानेकधर्मकर्मसु कर्मठा ।
ज्ञाताधर्मकथाङ्गस्य प्रतिमेतामलीलिखत् ॥ ७ ॥
महत्तरादिसाध्वीनां वाचनादिकहेतवे ।
ग्रन्थोऽयं लेखितो जीयात् यावच्चन्द्रदिवाकरौ ॥ ८ ॥

इति प्रशस्तिः ।

## 1774. भगवतीसूत्रं सटीकम्

Post-Colophonic: संवत् १७३० वर्षे कार्तिकवदि एकादशीदिवसे ११। श्रीमज्जेसलमेरुमहादुर्गे लिखिता प्रतिरियं । सकलक्षितिपालमण्डलमण्डनराउल श्रीअमरसिंहजी विजयराज्ये । कल्याण-मस्तु । श्रीरस्तु लेखकवाच(क)योः । शुभं भवतु श्रीः ।

## 1801. स्थानाङ्गसूत्रम्

Post-Colophonic

श्रीमदणहिल्लपत्तननगरे श्रीवीरवंशसम्भूतः ।
श्रेष्ठी धनपालाख्यः समभूद् विख्यातकीर्त्तिभरः ॥ १ ॥
तत्पुत्रः कुम्पाख्यस्तत्पुत्रो देवडाभिधः प्रथितः ।
तत्पुत्रौ संघाधिपभोला-यमुणाभिधौ विदितौ ॥ २ ॥
भोलाख्येन श्रीमत्संघाधीशेन मुदितचित्तेन ।
भांभू नाम्न्या दयितया सहितेन प्रौढवित्तेन ॥ ३ ॥
श्रीजिनबिम्बनिर्मापणप्रतिष्ठाप्रवेशगुरुकार्यात् ।
सम्यक्त्वग्रह्यव्रतधरणसमुच्चारकरणाच्च ॥ ४ ॥
दर्शनमोदकलम्भन-श्रीकल्पप्रमुख्यशास्त्रलेख्यनतः ।
तद्वाचनविस्तरतः समस्तसंघार्चना विधितः ॥ ५ ॥
स्फूर्जत्र च स क्षेत्र्या-मुप्तमिति स्वीयवर्धनबीजम् ।
आसाभिधः समजनि तस्य तनूजः सुकृतयुक्तः ॥ ६ ॥
श्रीमद्वीराख्यवंशाम्बुनिधिकुमुदिनीपद्मनेत्राभुजं मः ।
श्रीजूर्नामेकविंशत्यनगुगुणगणप्रस्फुरद्बद्धरङ्गः ।
आसाको गुप्तदानी सकलजनदयापालकः सौवधार-
प्रेंखत् सन्तोषधारी जयतु भुवि नवक्षेत्रविन व्ययारः ॥ ७ ॥
आसाकेनाऽऽसलदे परिणीता धोतया तु सहितेन ।
सोदर श्रीमासोमा............................

## 1868. उत्तराध्ययनसूत्रम्

Post-Colophonic: श्रीवर्द्धमानपुरि पुण्यनिधिः प्रसिद्धः,
श्रेष्ठी बभूव स धनो ननु वर्द्धमानः ।

तद्भार्यया समयभक्तिजुषा च भांभू-
नाम्न्या प्रधानपदचङ्क्रमणङ्कपुत्र्या ॥ १ ॥
श्रीउत्तराध्ययनसूत्रमलेख्यशेषं,
निर्दोषशीलसहिताङ्कर...निनन्दुः ।
पुण्यार्थमङ्कनमणे वरसूरिराज-
माणिक्यकुञ्जरगुरोरुपकारितश्च ॥ २ ॥
यावत् स्थिरः सुरगिरिर्गगने[च]भानु-
र्देदीप्यते शशभृदेव उदेति यावत् ।
तावत्सुसाधुभिरिदं प्रतिवाच्यमानं
सूत्रं चिरं जयतु वाञ्छितकल्पवृक्षम् ॥ ३ ॥

संवत् १५२६ वर्षे आषाढवदि तेरसि गुरुवासरे ।

( In a different hand writing )

संवत् १६८९ वर्षे । श्रीद्वीपबंदिरे । श्रीज्ञानकोशे । पं० श्रीवमाकुशल ग० भिपुं-स्तकमिदं वाचनाय प्रदत्तम् । वाच्यमानं चिरं नन्दतात् । श्रीरस्तु ।

## 1891. उत्तराध्ययनसूत्रावचूरिः

OPENING : नमः श्रीजिनाय ।

श्रीवर्द्धमानमानम्य बृहद्वृत्त्यनुसारतः ।
उत्तराध्ययनानामवचूरिं लिखाम्यहम् ॥ १ ॥

CLOSING : & COLOPHON : इति जीवाजीवविभक्तिनामाध्ययनावचूरिः समाप्ता तत्माप्तौ च समाप्ता श्री उत्तराध्ययनावचूरिः ।

निर्युक्तिकारोप्येतन्माहात्म्यमाह—जे इत्यादि गाथाद्वयं स्पष्टम् । नवरं—भव्याः सम्यग्दर्शनादिगुणयोग्या भिन्नग्रन्थय इत्यर्थः । त एव किलेति परोक्षाप्तवादसूचकः भव-सिद्धिकादीनामेवैतत्पाठफलस्य सम्यग्ज्ञानादेः सद्भावेन निश्चयतस्तत्पाठसम्भवोऽन्येषां व्यवहारत एवेत्येमाभिधानम् । उक्तमेवार्थं व्यतिकरेणाह—XXXXXXXXX तच्चित्तप्रसन्नताल्पाद्धे तोरधीयेत, न तु प्रमादं कुर्यादिति भावः ।

इति श्रीउत्तराध्ययनावचूरिः ।

Post Colophonic : संवत् १४९७ वर्षेऽलेखि चित्रकूटे ।

## 1894. कल्पसूत्रम्

Illustrations on ff. 1b, 2a, 4a, 8a, 11a, 16b, 18a, 22a, 38d, 45a, 45b, 48a, 48b, 51b, 53a, 53b, 56a, 57a, 59b, 60a, 64a, 66a, 67a, 72b, 73a, 74b, 75b, 78b, 79a, 80a, 83b. 80b, 95a, 100a, and 131a.

### 1895. कल्पसूत्रम्

Illustrations on ff. 1a, 2a, 9a(2), 14a, 17a, 18a, 29a, 37a, 38a, 40a, 41a, 46a and 47a.

### 1896. कल्पसूत्रम्

Illustrations on ff 1b, 2a, 5a, 10a, 12b, 22b, 23a, 28b, 29a, 33a(2), 34b, 37b, 40b, 45b, 50b, 54b, 71b and 72a.

### 1897. कल्पसूत्रम्

Illustrations on ff 1b, 2a, 5a, 7b, 11b, 16b(2), 20b(2), 30b, 33b, 40b and 42b.

### 1898. कल्पसूत्रम्

Illustrations on ff. 1b, 2a, 3b, 7b, 12b, 15b(2), 16a, 16b, 17b, 18a(2), 18b, 19a,(2), 19b 20a, 20b(2), 21a, 24a, 25b, 29a, 34a, 35b, 38a, 41b, 43b, 46b, 48b, 51b, 56b, 58a, 62a, 62b, 67a, 67b, 71a, 78a and 91a.

### 1900. कल्पसूत्रम्

Illustrations on ff. 1b, 2a, 4b, 8b, 11b, 16b, 18b, 21b, 22a, 36a, 41b, 42b, 48b, 51a, 51b, 55b, 56b, 59b, 60a, 63a, 63b, 67b, 69b, 75b, 77b, 82b, 83b, 84a, 87b, 88a, 92b, 93b, 99a, 104a, 104b and 132b.

### 1901. कल्पसूत्रम्

Illustrations on ff 2a, 25a, 40a, 47b, 51a, 52b, 57b and 71a.

### 1902. कल्पसूत्रम्

Illustrations on ff. 1b, 2b, 3b, 6b, 7b, 11b, 62a, and 66a. 2 illustrated ff. unnumbered

### 1903. कल्पसूत्रम्

Illustrations on ff. 7a and 17b.

### 1904. कल्पसूत्रम्

Illustrations on ff. 8b, 17b, 23b and 82b.

## 1907. कल्पसूत्रं 'कल्पचन्द्रिका' टीकाञ्चितम्

Ct OPENING:

श्रीगुरुभ्यो नमः।

प्रणम्य परमानन्ददायकं विश्वविनायकम्।
वीरं [गुरुं गु]णोपेतमुपकारिणमद्भुतम्॥ १॥

समासाद्य तयोः स्फारं प्रसादं मयका नव।
कल्पागमस्य व्याख्यानमुच्यते सुगमानि च॥ २॥

COLOPHON: इति श्रीजिनहर्षसूरिशिष्योपाध्यायश्रीसुमतिहंसविरचितायां श्रीकल्पचन्द्रिकायां नवमं व्याख्यानं तत्समाप्तौ कल्पविवरणं सम्पूर्णम्।

Post-Colophonic: सं० १७३४ चैत्रकृष्ण १० तिथौ गुरुवारे पं० आनन्दनिधानगणिनाऽलेखि श्री सोभतिमध्ये श्रीरस्तात्।

Illustration on f. f. 1b, 6b, 7b, 8b, 9a, 11b, 13b, 17b, 18b, 19a, 20b, 21a, 22a, 23a, 24b, 25b, 26b, 27a, 28a, 28b, 29a, 30b, 31a, 31b, 32a, 33a! 34b. 35b, 36a, 37b, 38a, 39a, 40b, 41a, 42b, 44a, 45a, 46b, 48b, 49b, 50a, 50b, 52b, 53b, 55a, 56a, 56b, 57a, 59b, 61a, 62a, 63a. 63b, 64b, 65a, 68a, 69b, 70a, 71b, 72a, 73a, 74a, 77b, 78b, 79b, 80a, 81b, 82a, 82b, 83a, 83b, 84a, 84b, 87a, 87b, 88a, 90a, 92a, 94b, 95a, 25b, 98b, 100a, 100b, 101b and 115a,

## 1922. कल्पसूत्रं सावचूरि

Post-Colophonic

स्वस्तिप्रदश्रीविधिपक्षमुख्याधीशाःसमस्तागमतत्त्वदक्षाः।
श्रीभावसागरसूरिराजा जयन्ति सन्तोषितसत्समाजाः॥ १॥

श्रीरत्नमालं किल पुष्पमालं श्रीमालमाहुश्च ततो विशालम्।
जीयाद् युगे नाम पृथग् दधानं श्रीभिन्नमालं नगरं प्रधानम्॥ १॥

श्रीओएसवंशे सुखसन्निवासे आभाभिधः साधुसमा (भो) बभाषे।
भाति स्म तज्जो भुवि सावराज-स्तदङ्गजः श्रीभुडसी रराज॥ २॥

तस्यास्ति वाच्छूर्दयिता प्रशस्या कोऽलं गुणान् वर्णयितुं न यस्याः।
याऽजीजनत् पुत्रमणिं प्रधानं लोलाभिधानं सुरगोसमानम्॥ ३॥

जायाद्वयी तस्य गुणौघशालिनी चम्पाऽऽदिलक्ष्मान्यतमाऽत्य जामी।
विश्वम्भरायां विलसच्चरित्राः सुता अमी पञ्च तयोः पवित्राः॥ ४॥

वज्राँग - दूदाभिध - हेमराज-वधाख्याभिधानोऽप्यथ नेमराजः।
सुता च भाकूरपरा च सांपू तथा तृतीया प्रतिभाति पातू॥ ५॥

इत्यादिनिःशेषपरिच्छदेन परीवृतेनप्रणतोत्तमेन ।
शुद्धक्रियापालनपेशलेन श्रीलोलसुश्रावकनायकेन ।। ६ ।।
सुवर्णदण्डप्रविराजमाना विचित्ररूपावलिनिःसमाना ।
श्रीकल्पसूत्रस्य च पुस्तिकेयं कृशानुषट्पञ्चधरामितेऽब्दे १५६३ ।। ७ ।।
संलेखिता श्रीयुतवाचकेन्द्रश्रीभानुमेर्वाह्वयसंयतानाम् ।
विवेकतःशेखरनामधेयसद्वाचकानामुपकारिता च ।। ८ ।।
न जातु जाड्यादिधरा भवन्ति न ते जना दुर्गतिमाप्नुवन्ति ।
वैराग्यरङ्गं प्रथयन्त्यमोघ ये लेखयन्तीह जिनागमौघम् ।। ९ ।।
श्रीजिनशासनं जीयाद् जीयाच्च श्रीजिनागमः ।
तल्लेखकश्च जीयासुर्जीयासुर्भुवि वाचकाः ।। १० ।।

इति प्रशस्ति । छः । श्रीः ।

[ In a different hand writing ]

श्रीराणपुरनगरवास्तव्य-सुश्रावक-श्राद्धगुणसम्पन्न-शेठ श्रीपुरुषोत्तमात्मज-वाडीलालाख्यनामधेयेन कल्पसूत्राख्यमिदं पुस्तकं स्वश्रेयसे श्रीमद्पन्यासपदविभूषितानां पूज्यपादानां देवविजयाख्यानां पठनार्थं समर्पितम् । वि. सं. १९८२ पौषकृष्णा १ ।

Illustrations on ff. 1b, 2a, 5a, 7b, 11a, 18a, 21b, 22a, 37b, 42b, 43a, 49b, 52a, 52b, 60b, 62b, 63b, 67b, 69b, 70b, 76b, 77b, 79b, 83b, 84a, 84b, 88b, 89a, 93b, 94b, 95b, 100b, 106a, 106b, 133b and 134a.

## 1925. कल्पसूत्रं सावचूरि

Post Colophonic : संवत् १५२३ वर्षे वैशाखसुदि ३ सोमवारे श्रीज्ञानकोयगच्छे मौनीश्रीशांतिसूरिसन्ताने श्रीसिद्धसेनसूरिपट्टे भ० श्रीधनेश्वरसूरीणां को० चतुर्भुजेन काश्य प्रदत्तम् ।

यादृश्यं(?शं) पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ।

श्रीस्यात्

× × ×

एकः सहस्रो द्वि···तो समेतः श्रिष्टस्य ··षोडशभिर्विदन्तु ।
कल्पस्य संख्या···कद्वि···शिष्टा विशारदैः···गुणाभिधस्य ।। १ ।।

सं·······

नक्षत्राक्षतपूरितं·······तस्थालं विशालं नभः,
पीयूषद्युतिनालिकेरकलितं चन्द्रप्रभा चन्द्र··· ।

यावन्मेर (रु) करे गभस्ति क''' के वत्त धरित्री ऽङ्गना,
तावन्नन्दतु धर्म्मकर्म्मनिरतः श्रीसङ्घभट्टारकः ॥ १ ॥
शुभं भवतु:। लेखकवाचकयोः। श्री स्यात्।

× × ×

श्रीनांणाबालगच्छे उसवाल ज्ञातीय उसभगोत्रे। साह देपा भार्या चांपलदे पुत्र कोठारी खेता चउहत्थ द्वाभ्यां विमृश्य कञ्चम्युद्यापने। श्रीकल्पपुस्तकमिदं काराप्य स्वसद्गुरूणां प्रदत्तम्। श्रीरस्तु:।

× × ×

Illustrations on ff. 1b, 2a, 3b, 6b, 14a, 17a, 17b, 32a, 33a, 38b, 40b, 41b, 46b, 47b, 49b, 53a, 59a, 59b, 64a, 68b, 71b, 77a, 89a, and 104a(2).

## 1926. कल्पसूत्रं सावचूरि

Illustrations on ff. 1b, 2a, 3b, 5b, 7b, 12b, 14a, 22b, 23a, 26b, 29b, 30a, 31b, 32b, 34b, 36b, 38b, 41a, 41b, 45b (2), 46b, 47a, 48a, 50b, 51a, 57b, 60b, 63a, 64a and 64b.

## 1927. कल्पसूत्रं सावचूरि

Illustrations on ff. 3a, 25a(2), 26b(2), 34b, 39b, and 44b.

Post Colophonic

स्वस्तिश्रीनिलयं खानपुर सुरपुरोपमम्।
धर्मन्यायमये यत्र नित्यं लोकः सुखायते ॥ १ ॥

यत्राभवन्निखिललक्ष्मिगृहं महेभ्यः प्राग्वाटवंशतिलकः स्वकुलार्णवेन्दुः।
प्रह्लादयन् जनमनांसि गुणैरनेकैराल्हाभिधः सुकृतभूर्गुरुदेवभक्तः ॥ २ ॥

तस्याऽजायत जाया मायादिकदोषमुक् सतीरत्नम्।
जिनधर्मरता भरमी नाम्ना साम्ना गिराकलिता ॥ ३ ॥

अभूत्तयोः सूनुरनूनलक्ष्मीः स गोवलः केलिगृहं गुणानाम्।
अमात्यमौलिः कलिकालगर्वं सर्वंकषः पुण्यमयैककृत्यैः ॥ ४ ॥

× × ×

## 1928. कल्पसूत्रं सावचूरि

Ct. COLOPHON

श्रीदशाश्रुतस्कन्धाष्टमाध्ययनावचूरिः। संदेहविषौषधीतः श्रीमच्चन्द्रकुलमण्डनसूरिभिरुद्धरिता। छ।

Post-Colophonic: संवत् १४८५ वर्षे श्रावणवदि ५ बुधे लिखितं श्रीस्तम्भतीर्थे हरिदासेन । छ ।

संवत् १४८५ वर्षे श्रामलेश्वरवासि श्रा० लाहूः स्वश्रेयसे श्रीकल्पसूत्रं लेखितवती । ।। श्रीः ।। तपाश्रीसोमसुन्दरसूरीणामुपदेशेन ।

Illustrations on ff 1b, 25b, 26a and 50b.

## 1929. कल्पसूत्रं सटिप्पणम्

Post-Colophonic: संवत् १६६४ वर्षे भादवावदि ४ रविदिने हंसनगर्यां इदं पुस्तकं लिपीकृत्वा मनःहर-ऋषीणां स्वार्थे । श्रीमत्सद्गुरून् पूज्य ऋषिश्री ५ सुभटाख्यप्रसादात् लिखतमस्तु । शुभं श्रेयं लेखक–पाठकयोश्चिरं नन्द्यात् । श्रीः ।

× × ×

Illustrations on ff. 1b, 2a, 4b, 7a, 8b, 14b, 15a, 18a, 18b, 20b, 21b, 22a, 23b, 24a, 26a, 28b and 31b.

## 1962. दशवैकालिकसूत्रम्

Post-Colophonic संवत् १४१० वर्षे मार्गशीर्षशुदि ४ सोमे लिखितम् ।

## 1965. दशवैकालिकसूत्रटीका

Ct. OPENING: ॐ नमः ।

जयति विजितान्यतेजाः सुरासुराधीशसेवितः श्रीमान् ।
विमलस्त्रासविरहितस्त्रिलोकचिन्तामणिर्वीरः ॥ १ ।

इहार्थतस्तत्प्रणीतस्य सूत्रतो गणधरोपनिबद्धपूर्वगतोद्धृतस्य शारीरमानसातिकटु-कटुःखसन्तानविनाशहेतोर्दशवैकालिकाभिधानस्य शास्त्रस्यातिगम्भीरपदार्थगोचरस्य व्याख्या प्रस्तूयते । तत्र प्रस्तुतार्थप्रतिपादनार्थमेव धर्मस्य नमस्कारद्वारेण शेषविघ्न-विनायकोपशान्तये भगवान् शय्यम्भवाचार्या भावमङ्गलमाह—धम्मो मङ्गलमित्यादि ।

Ct. COLOPHON & CLOSING: समाप्ता दशवैकालिकटीका ।

महत्तराया याकिन्या धर्मपुत्रेण चिन्तिता ।
आचार्यहरिभद्रेण टीकेयं शिष्यबोधिनी ॥ १ ॥

दशवैकालिकटीकां विधाय यत्पुण्यमर्जितं तेन ।
मात्सर्यदुःखविरहात् गुणानुरागी भवतु लोकः ॥ २ ॥

दशवैकालिकानुयोगात् सूत्रव्याख्या पृथक्कृता ।
हरिभद्राचार्यकृतान्मोहाद् भक्त्याऽथवा मया ॥ ३ ॥

श्रीमद्बोधकशिष्येण श्रीमत्सुमतिसूरिणा ।
विद्वद्भिः सूत्रतो द्वेषो मयि कार्यो मनागपि ॥ ४ ॥

यस्माद् व्याख्याक्रमः प्रोक्तः सूरिणा भद्रबाहुना ।
आवश्यकस्य निर्युक्तौ व्याख्याक्रमविपश्चिता ॥ ५ ॥

सूत्रार्थः प्रथमो ज्ञेयो निर्युक्त्या मिश्रितस्ततः ।
सर्वव्याख्याक्रमैर्युक्तो भणितव्यस्तृतीयकः ॥ ६ ॥

प्रमादकार्यविक्षेपचेतसां तदयं मया ।
क्रियाया अवबोधार्थं साधूनां तु पृथक् कृतः ॥ ७ ॥

लब्धमानुष्यकं जन्म ज्ञात्वा सर्वविदां मतम् ।
प्रमादमोहसंमूढा वैकल्यं येन यान्ति हि ॥ ८ ॥

जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुते ।
संसारसागरे रौद्रे ते भ्रमन्ति विडम्बिताः ॥ ९ ॥

ये पुनर्ज्ञानसम्यक्त्वचारित्रविहितादराः ।
भवाम्बुधिं समुल्लंघ्य ते यान्ति पदमव्ययम् ॥ १० ॥

ग्रंथाग्रं १००० प्रत्यक्षरगणना कृतमस्ति । शुभं भवतु ।

## 2052. गौडीपार्श्वनाथस्तवनम्

OPENING : सकलभविकचेतः कल्पनाकल्पवल्ली-
गहनवनवितानं प्रोद्भवद्वारिवाहम् ।
फणिपतिकलितांह्रि चारुगौडीपुरेस-
मननुगुणनिधानं पार्श्वनाथं नवामि ॥ १ ॥

विबुधनत विभो ते खूब दीदार पाया
सुगुरुभिरपि सम्यक् देव तूं ही बताया ।
जिन तव परिकर्म्मि आज हु ताजगी में,
परिरमति मनो मैं पास की आस की में ॥ २ ॥

शिरसि मम स ना चेत् जो हुवे दस्त तेरा,
भुवनजनचमत्कृत् तो खुले बख्त मेरा ।
जयति जयि प्रभाव पास जी का दुनि में,
चतुरमिकरवक्त्रात् सिफ्त तेरी सुनी में ॥ ३ ॥

त्वमसि मम विधाता तूं ही मादर पिदर तूं,
कुरु मदुपरि तूर्णं दोस्त सिद्धि निजर(तूं) ।
कलयति मनुजन्मा यार तारीफ केती,
तव त्रिभुवनराजो जो जुभां एक सेती ॥ ४ ॥

अनिमिषप्रणतांह्रे मात वामा के नंदा,
त्वमसि मम शरण्यस्तें प्रभुजी हुं बंदा ।

त्वमपि यदि मदीयां अर्ज दिल में न ल्यावे,
भवति सकति मोन्यो दाद जिसू पास जावे ।। ५ ।।

न हि न हि विहितास्ते कछुगुनह की कमी में,
सह न उत त्वदाभो नांहि आसमांन जमी में ।
परमतमकृपालो गुनह बगसीस कीजे,
नृपतिमहिम जै मोज महाराज दीजे ।। ६ ।।

स्थलपतिपुरतो हो ग्रोर को देव केसा,
जनयति किल वादं क्या रुपैये स पेसा ।
लसति भुवनभर्तुं नूं र आपताब जैसा
स्फुरति भुवि तरस्ते मई गाजी हमेसा ।। ७ ।।

समुदितनवतेजः श्रीधवलधांगदेवा,
भृशमुपतनुते ते नाथ हर रोज सेवा ।
मयि न पवनत्विट्...कीजिए एसी नो(की),
प्रलमहमिह दद्यां जेसी नोबत् फते की ।। ८ ।।

कलशः

CLOSING: इत्थं श्रीपुरुहूतवन्दितपदो गोडीपुरालङ्कृति-
र्वामाकुक्षिसरस्सरोरुहसमः श्रीपार्श्वनाथः प्रभुः ।
श्रीमत्पारकराख्य राष्ट्रसुंदरीसिंहः कृपानां निधि-
विश्वाहर्म्मगिरश्वसेनतनुभूर्विद्यार्णवः संस्तुतः ।। ९ ।।

COLOPHON: इति श्रीगोडीपार्श्वस्तुति सम्पूर्णम् ।

Post Colophonic: संवत् १९०६ ना वर्षे । मिति माहा सुद १ दिने । चिरं रत्नचन्दपठनार्थं श्रेयः ।

## 2115. पार्श्वनाथ(समस्यामयं)स्तोत्रम्

OPENING: श्रीपार्श्वनाथं तमहं स्तवीमि त्रैलोक्यलोकं पृणधामधाम ।
सामोदमुद्भासि यदीयकीर्तिरामामुखं चुम्बति कार्त्तिकेयः ।। १ ।।

CLOSING: प्रीतां रूपवतीं स तं जिनपतेहं ल्लक्ष्मिलीलावतीं,
हित्वा रूपरसोज्झितां रमयसे यन्मुक्तिसीमन्तिनीम् ।
तन्नूनां भवतापि तीर्थपतिना त्वेतत् स्फुटं निर्ममे,
युक्तायुक्तविचारणा यदि भवे स्नेहाय दत्तं धनम् ।। ११ ।।
इत्थं योगीन्द्रचेतःकमलकमलभूः मुक्तिकासारहंसः,
कल्याणांकूरकन्दः समममहिमरमा मञ्जरीवल्लरी श्रीः ।
मवून्मेव'''बीजं भुवनजनमनोहासलीलावतंसः,
श्रीपार्श्वः स्यात् समस्यास्तवकुसुमकृताभ्यर्चनाभीष्टलक्ष्मैः ।।१३।।

COLOPHON: इति श्रीपार्श्वनाथस्तोत्रं समस्यामयम् ।

[ In a different hand writing ]

॥ संवत् १७२८ वर्षे लिपिकृतं श्रीअंचलगच्छे। श्रीखरतरगच्छे। उ० श्रीखेमजी शिष्य पं० कुंभजी वाचनार्थं। संवत् १७४१ दत्तं ढींकोडाग्रामे ए स्तोत्र प्रजमिपि सप्रभाविक सशुद्धं ॥ १ ॥

## 2123. पार्श्वनाथस्तोत्रम्

OPENING: ॐ ह्रीं श्रीधरणोरगेन्द्रमहितः श्रीसप्तभोगोल्लसन्-
माणिक्यावलिकान्तिसञ्चयदितध्वान्तप्रपञ्च प्रभो।
श्रीवामोदरचारुपङ्कजवनोमार्त्तण्डबिम्बायते,
विघ्नश्रेणिविमंथ[नो] विजयते श्रीपार्श्वनाथो जिनः ॥ १ ॥

CLOSING: निःशेषमन्त्राक्षरचारुमन्त्रं श्रीपार्श्वतीर्थेश्वरनामधेयम्।
सदा स्मरामः प्रमदान्महामः प्रीत्या नमामः कुशलं लभाम ॥ ५ ॥

COLOPHON: इति पार्श्वस्तवनम्।

## 2128. पार्श्वनाथस्तोत्रं सटीकम्

W.-OPENING: लक्ष्मीर्महस्तुल्यसतीसतीसती प्रवृद्धकालो विरतोऽरतो रतो।
जरारुजापन्महता हताऽहता पार्श्वं फणे रामगिरौ गिरौ गिरौ ॥ १ ॥

Ct. OPENING [व्या०] हे महस्तुल्य हे उत्सववर्णनीय हे मित्र सति पुरुषे ई इति सम्बोधने सती विद्यमाना सती उत्तमा साध्वीत्यर्थः। प्रवृद्धः के सुखे प्राल उद्यमो यस्य प्रवृद्धकालः विरतः सार्वविरतः प्ररतं ब्रह्मचर्यं तस्य उ रक्षा तत्र रतः जरारुजा प्रापत् एतावति कृते किं स्यात् त्वया महता हता नाशं प्रापिता पूर्वं केनाऽपि संसारिणा न हता विश्व-स्ता पार्श्वनाथसमीपं फणा गच्छ तत्र यात्रां कुरु ई सन्निधौ प्रत्यक्षे वा रामनामनि गिरौ पर्वते किंविशिष्टः त्वं गिरा उपलक्षितः ऊ इति निश्चयेन अव्ययानामनेकार्थ-त्वात् ॥ १ ॥

W.-CLOSING: तर्के व्याकरणे च नाटकचये काव्याकुले कौशले,
विख्यातो भुवि पद्मनन्दिमुनिपस्तत्त्वस्य कोशं निधिः।
गम्भीरं यमकाष्टकं भणति यः सम्भूय सा लभ्यते,
श्रीपद्मप्रभदेवनिर्मितमिदं स्तोत्रं जगन्मङ्गलम् ॥ ९ ॥

Ct. upto 3rd Padya only

## 2129. पार्श्वनाथस्तोत्रम्

श्रीगुरुभ्यो नमः।

OPENING: श्रीमद्देवेन्द्रवृन्दामणिमुकुटतटीज्योतिषाचक्रवालैः,
व्यालीढं पादपीठं शठकमठकृतोपद्रवा व्याधितस्य।

लोकालोकावभासी स्फुरदुरुविमलज्ञानसद्दीपदीप्तं,
प्रध्वस्तध्वान्तजालं वितरतु स सुखं पार्श्वनाथोऽत्र नित्यम् ॥ १ ॥

इत्थं मन्त्राक्षरोत्थं वचनमनुपमं पार्श्वनाथस्य नित्यं,
विद्वेषोच्चाटनादिस्तम्भनजयवसं पापरोगापनोदि ।
प्रोत्सत्सर्पज्जंगमादिस्थिरविषमुखध्वंसनं स्वायुदीर्घ-
रारोग्यैश्वर्ययुक्तो भवति पठति यः स्तौति तस्येष्टसिद्धिः ॥८॥

COLOPHON : इति श्रीपार्श्वनाथस्तवनं सम्पूर्णं समाप्तम् ।

## 2215. सर्वजिनस्तुतिः

OPENING: श्रीशत्रुञ्जयमुख्यतीर्थतिलकं श्री नाभिराजाङ्गजं,
नेमिं रैवतदैवतं जिनपतिं चन्द्रप्रभं पत्तने ।
तारङ्गेप्यजितं जिनं भृगुपुरे श्रीसुव्रतं स्तंभने,
श्रीपार्श्वं प्रणमामि सत्यनगरे श्रीवर्द्धमानं त्रिधा ॥ १ ॥

CLOSING : शक्रश्चन्द्ररविग्रहाश्च धरणे·द्रब्रह्मशान्तिबिका, (?)
दिक्पालेशकपर्दिगोमुखगणाश्चक्रेश्वरी भारती ।
जैनज्ञानतपःक्रियाव्रतविधिः श्रीतीर्थयात्राविधु,
श्रीसंघे चतुरां चतुर्विधिसुरास्ते सन्तु भद्रङ्कराः ॥ ४ ॥

COLOPHON : इति श्रीजिनस्तुतिः ।

## 2317. विंशतिस्थानकविचारामृतसंग्रहः

OPENING: × × × × × यारपूया, कायव्वा वीयरागाणं ॥ २६ ॥
(on f 2.)
कुसुमक्खयगंधपईव-धुवनेविज्जफलजलेहिं पुणो ।
अट्ठविहकम्ममहणो, जिणपूया अट्ठहा भणिया ॥ २७ ॥

CLOSING : & COLOPHON: इति श्रीविंशतिस्थानकविचारामृतसंग्रहाख्ये ग्रन्थे श्रीतपोगच्छेश-श्रीजयचन्द्रसूरि राजशिष्येण जिनहर्षगणिना निर्मिते विंशतिस्थानककथा । ग्रन्था. १५० अ. ८ । इति वीसस्थानकसम्पूर्णमिति ।

अर्हत्कर्म श्रुवाणोत्या विंशतेरेकमप्यदः ।
पदमाराधयत्येवं सम्यग्विधिपुरस्सरम् ॥ १ ॥

× × ×

तपोगच्छेऽभवद् भून्मा महिम्ना विश्वविश्रुतः ।
जगच्चन्द्रगुरुः श्रीमान् सम्यग्ज्ञानक्रियानिधिः ॥ १२ ॥
श्री देवेन्द्रगुरुस्तस्य पट्टेऽभूत्र प्रकटप्रभुः ।
प्रादेशनासमाजे तद् वस्तुपालसभापतिः ॥१३ ॥
तच्छिष्याः कीर्तिविख्याताः विद्यानन्दमुनीश्वराः ।
अजायंत जगत्पूज्या ज्यायो ज्ञानक्रियागुणैः ॥ १४ ॥

तत्पट्टोदयभास्वानासीन्निःसीमतेजसां राशिः ।
श्रीधर्मघोषगणभृद् सच्चक्रानंदिगोविभवः ॥ १५ ॥

ततश्च—

श्रीसोमप्रभ इत्यासीत् सूरिः सीमा महात्मनाम् ।
व्यधाद्धि गौतमवीरशासनयोर्निजश्रियाः ॥ १६ ॥

ततः शक्र नु स्तुत्यः श्रीसोमतिलकाह्वयः ।
सूरिर्भूरियशा यज्ञे विज्ञेषु प्रथितो धुरि ॥ १७ ॥

श्रीदेवसुन्दरगुरुर्गरिमाम्बुराशि-
चित्रा(र)सितारिरिभवद्भुवनातिशायी ।
तत्पट्टपङ्कजरविः पविपाणितेजा
भूजानिवंदितपदः शिवमार्गदर्शी ॥ १८ ॥

सूरिर्युगोत्तमसमोऽजनि तस्य पट्टे,
श्रीसोमसुन्दरगुरुर्गुरुभाग्यशाली ।
यं श्रीसुधर्मगुरुणा गणभृत्पुरोगं
सर्वाङ्गिचङ्गिमगुणैस्तुलयन्ति सन्तः ॥ १९ ॥

तच्छिष्यः प्रथमः समर्थमहिमा श्रीविद्यगोष्ठीगुरुः,
सूरिः श्रीमुनिसुन्दरः सुरगुरुख्यातः क्षितौ प्रज्ञया ।
मस्ति प्रास्ततमोभरस्तदपरः सूरिस्तु भूरिप्रभा-
शाली श्रीजयचन्द्र इत्यभिधया सर्वत्र लब्धोदयः ॥ २० ॥

यो विश्वाद्भुतलब्धिभिः सुमनसामाश्चर्यकृद्भिः कलौ
सौभाग्याम्बुधिराससादपदवीं श्रीगौतमस्वामिनः ।
स श्रीमद्गुरुसोमसुन्दरपदाम्भोजाकराहर्पति-
र्जीयाच्छ्रीजयचन्द्रसूरिरवनौ सूरीश्वरग्रामणीः ॥ २१ ॥

विंशतिस्थानकाचार-विचारामृतसङ्ग्रहः ।
गच्छेशश्रीजयचन्द्रसूरिशिष्येण निर्मितः ॥ २२ ॥

वीरग्रामाख्यपुरे युग्मव्योमेन्दुपञ्चभिः ।
प्रमिते वत्सरे हर्षे जिनहर्षेण साधुना ॥ २३ ॥

ग्रन्थस्यास्य पवित्रस्य वाचनश्रवणादिभिः ।
लभन्ते प्राणिनः प्रौढं श्रीजिनेश्वरसम्पदम् ॥ २४ ॥

ग्रन्थोऽष्टाविंशतिशतानुमितः सर्वसंख्यया ।
जीयादेयं(देयं) बुधश्रेणिवच्यमानो निरन्तरम् ॥ २५ ॥

इति श्रीविंशतिस्थानकविचारामृतसङ्ग्रहः सम्पूर्णः ॥श्री॥ ग्रं० ४० ।

## 2331. श्राद्धविधिसूत्रम् (श्राद्धविधिप्रकरणम्) सटीकम्

OPENING :

श्रीरत्नमण्डनसूरिगुरुभ्यो नमः ।

अर्हत्सिद्धगणीन्द्रवाचकमुनिप्रष्ठाः प्रतिष्ठास्पदं,
पञ्चश्रीपरमेष्ठिनः प्रददतां प्रोच्चैर्गरिष्ठात्मनाम् ।
द्वेधान् पञ्चसुपर्वणां शिखरिणः प्रोद्दाममाहात्म्यत-
श्चेतश्चिन्तितदानतश्च कृतिनां ये स्मारयन्त्यन्वहम् ॥ १ ॥

श्रीवर्द्धमानमनुपमविज्ञाननिधानमानमामि मुदा ।
श्रीसिद्धार्थप्रभवं श्रुतवाग्विभवं गुरुगरिष्ठम् ॥ २ ॥

श्रीवीरसिद्धान्तगुरूणां युगपन्नमस्कारस्त्वर्थः ।

दिनरजनिकृत्यमुख्यद्वारोऽपि निबद्धमबुधबोधकृते ।
संक्षेपाद् विवृणोमि श्राद्धविधिप्रकरणं स्वकृतम् ॥ ३ ॥
युगवरतपागणाधिपपूज्यश्रीसोमसुन्दरगुरूणाम् ।
उपदेशात् साहसमिमाद्रियते मादृशेनाऽपि ॥ ४ ॥

तस्य चेयमाद्यगाथा—

सिरिवीरजिणं पणमिअ सुआउ साहेमि किमवि सड्ढविहिं ।
रायगिहे जगगुरुणा जह भणिअं अभयपुट्ठेन ॥ १ ॥

CLOSING : & COLOPHON :

एअं गिहिधम्मविहिं पइदिअहं निव्वहंति जे गिहिणो ।
इहभवि-परभवि-निव्वुइसुहं लहु ते लहंति धुवं ॥ १६ ॥

इति श्रीतपागच्छाधिपश्रीसोमसुन्दरसूरि-श्रीमुनिसुन्दरसूरि-श्रीजयचन्द्रसूरि-श्रीभुवन सुन्दरसूरिशिष्यश्रीरत्नशेखरसूरिविरचितायां विधिकौमुदीनाम्न्यां श्राद्धविधिप्रकरणवृत्तौ जन्मकृत्यप्रकाशकः षष्ठप्रकाशः ।

विख्याततपेत्याख्या जगति जगच्चन्द्रसूरयोऽभूवन् ।
श्रीदेवसुन्दरगुरूत्तमाश्च तदनुक्रमाद्विदिताः ॥ १ ॥

पञ्च च तेषां शिष्यास्तेष्वाद्या ज्ञानसागरा गुरवः ।
विविधावचूर्णिलहरिप्रकटनतः सान्वयाह्वानाः ॥ २ ॥

श्रुतगतविविधालापकसमुद्धृतः समभवंश्च सूरीन्द्राः ।
कुलमण्डना द्वितीया श्रीगुणरत्नास्तृतीयाश्च ॥ ३ ॥

षड्दर्शनवृत्ति-क्रियारत्नसमुच्चयविचारनिचयसृजः ।
श्रीभुवनसुन्दरादिषु भेजुर्विद्यागुरुत्वं ये ।
श्रीसोमसुन्दरगुरुव(रवः)प्रवरास्तुर्या अहार्यमहिमानः ।
येभ्यः सन्ततिरुच्चैर्भवति द्वेधा सुधर्म(र्मे)भ्यः ॥ ५ ॥
यतिजीतकल्पविवृतश्च पञ्चमा साधुरत्नसूरिवराः ।
यैर्मादृशोऽप्युद्धृत करप्रयोगेण भवकूपात् ॥ ६ ॥

श्रीदेवसुन्दरगुरोः पट्टे श्रीसोमसुन्दरगणेन्द्राः ।
युगवरपदवीं प्राप्तास्तेषां शिष्याश्च पञ्चैते ॥ ७ ॥

मारीत्यवमनिराकृतिसहस्रनामस्मृतिप्रभृतिकृत्यैः ।
श्रीमुनिसुन्दरगुरु[व]श्चिरंतनाचार्यमहिमभृतः ॥ ८ ॥

श्रीजयचन्द्रगणेन्द्रा निस्तन्द्राः संघगच्छकार्येषु
श्रीभुवनसुन्दरवरा दूरविहारैर्गुणोपकृतः ॥ ९ ॥

विषममहाविद्या तद् विडम्बनावधी विवृत्तियैः ।
विदधे यज्ज्ञाननिधिं मदादिशिष्या उपाजीवन् ॥ १० ॥

एकाङ्गा अप्येकादशाङ्गिनश्च जिनसुन्दराचार्याः ।
निर्ग्रन्था ग्रन्थकृतः श्रीमज्जिनकीर्तिगुरवश्च ॥ ११ ॥

एषां श्रीसुगुरूणां प्रसादतः षट्खतिथिमिते १५०६ वर्षे ।
श्राद्धविधिसूत्रवृत्तिं व्यधित श्रीरत्नशेखरः सूरिः ॥ १२ ॥

अत्र गुणसत्रविशावतंसजिनहंसगणिवरप्रमुखैः ।
शोधनलिखनादिविधौ व्यधायि सान्निध्यमुद्युक्तैः ॥ १३ ॥

× × ×

विधिकौमुदीति नाम्न्यां वृत्तावस्यां विलोकितैर्वर्णैः ।
श्लोकाः सहस्रषट्कं सप्तशती चैकषष्ठ्यधिका ॥ १५ ॥

श्राद्धहितार्थं विहिता श्राद्धविधिप्रकरणस्य सूत्रयुता ।
वृत्तिरियं चिरसमयं जयताज्जयदायिनी कृतिनाम् ॥ १६ ॥

ग्रन्थाग्रं० ४८५ अक्षर १० ॥ सर्वग्रन्थाग्रं ६७६१ ॥श्रीः॥

## 2393. कर्पूरप्रकरः सावचूरिः

W.-OPENING :

कर्पूरप्रकरः शमामृतरसे वक्त्रेन्दुचन्द्रातपः,
शुक्लध्यानतरुप्रसूननिचयः पुण्याब्धिफेनोदयः ।
मुक्तिश्रीकरपीडनेच्छुसिचयो वाक्कामधेनोः पयो-
व्याख्यालक्ष्यजिनेशपेशलरदज्योतिश्चयः पातु वः ॥ १ ॥

व्याख्यालक्ष्यजिनेशपेशलरदज्योतिश्चयः व्याख्यानावसरदृश्यजगन्नाथमनोहरदशन-कान्तिसमूहो वो युष्मान् पातु रक्षां करोतु । किम्भूतः शमामृतरसे कर्पूरप्रकर[:] शम उपशमः स एवामृतरसः पीयूषयूषच्छटानिर्यासस्तत्र कर्पूरप्रकर इव कर्पूरप्रकरः घनसार-राशिरित्यर्थः । × × × × × × एतावता कर्पूरचन्द्रातपप्रसूनतनिचयफेनो-दयाच्छसिचयपयःसमानोज्ज्वलो जिनदन्तकान्तिसमूहो वो रक्षतु इति संक्षेपार्थः ॥ १ ॥

W.-CLOSING :

श्रीवज्रसेनस्य गुरोस्त्रिषष्टि-सारप्रबन्धस्फुटसद्गुणस्य ।
शिष्येण चक्रे हरिणेयमिष्टा सूक्तावली नेमिचरित्रकर्त्रा ॥ ७८ ॥

इयं प्रत्यक्षा सूक्तावली सुभाषिताली हरिनाम्ना पण्डितेन चक्रे कृता । किम्भूते(न) हरिणा श्रीवज्रसेननामाचार्यस्य गुरोः शिष्येण विनेयेन । किम्भूतस्य श्रीवज्रसेनाचार्यस्य त्रिषष्टिशलाकापुरुषचरित्रप्रबन्धेन कृत्वा स्फुटः प्रकटः वाग्गुणो वाक्चातुरी पाठान्तरे प्रधानगुणो यस्य स तथा तस्य । पुनः किंविशिष्टेन हरिणा नेमिचरित्रस्य कर्त्रा कारकेन । येन नेमिनाथचरित्रं विनिर्ममे । तेन हरिकवीश्वरेण इयं सुभाषितावली कृता ।। ७८ ।।

Ct. COLOPHON

इति श्रीजिनवर्द्धनसूरिपट्टे श्रीजिनचन्द्रसूरिपट्टालङ्कारभाग्यसौभाग्यसार श्रीजिनसागरसूरिवरेण कर्पूरप्रकराभिध-सुभाषितकोशस्यावचूर्णिः समासतःकृता ।। १४००

## 2395. कर्पूरप्रकरटीका 'कथामहोदधिः'

Ct. OPENING

श्रीवर्द्धमानमानम्य निर्द्धूतवृजिनं जिनम् ।
कर्पूरप्रकरग्रन्थकथा वक्ष्यामि सप्रथाः ।। १ ।।

Ct. CLOSING & COLOPHON:

समाप्तोऽयं श्रीमान्कथामहोदधिनामाग्रन्थः ।

वर्षे वार्द्धर्ध्वरशरसुधारश्मिसंख्ये १५०४ बभूव,
श्रीमान् ग्रन्थः सकलसुमनश्चित्तहर्षप्रदायी ।
यावत् क्रीडां गगनकमले राजहंसौ विशाले
तन्वानौ स्वस्तिमिरभिदुरौ तावदेषोऽपि जीयात् ।।१।।
त्रैलोक्योपनिषद्विलासवसतेः प्रामाणिकज्ञप्रभोः,
श्रीसूरीश्वररत्नशेखरगुरोश्चातुर्यतः स्वगुरोः ।
शिष्यः पण्डितसोमचन्द्र गुरुधीर्माधुर्यधुर्या व्यधात्,
कर्पूरप्रकरादिकाव्यकथिताः किञ्चित्कथाः सप्रथाः ।।२।।
सप्तपञ्चाशदधिकशतसंख्या १५७ कथान्वितः ।
कथामहोदधिग्रन्थो हृद्यगद्यैर्विनिर्ममे ।। ३ ।।
निरवद्यगद्यपद्याक्षरसर्वप्रसंख्यया ।
अष्टादशशतीमानं ग्रन्थेऽस्मिन् विद्यते ध्रुवम् ।। ४ ।।

इत्येवं श्रीकर्पूरप्रकरकथाः सम्पूर्णाः ।

Post Colophonic:

लिखिताः पूज्याराध्यपण्डितश्रेणिशिरोरत्नपं०रत्नहंसगणिशिष्यमुख्यरत्नपूज्य पं० कुलरत्नगणिशिष्य पं० संघमाणिक्यगणिभिः । प्रतिरियं सकलगुणमन्दिर पं०सहजमन्दिरगणिप्रमुखैः वाच्यमाना चिरं नन्दतु । संवत् १५६७ वर्षे माघमासे शुक्लपक्षे ५ भृगुरेवत्यां चम्पकनेरमहानगरे । श्रीतपागच्छनायक श्री ६ श्रीहेमविमलसूरिविजयिराज्ये । श्रीरस्तु । छ ।

## 2404. गौतमपृच्छा 'सुखबोधिका' टीका सहिता

Ct. OPENING:

ऐं नमः ।

वीरं जिनं प्रणम्यार्थो बालानां सुखबोधकाम् ।
श्रीमद्गौतमपृच्छायाः क्रियते वृत्तिमद्भुताम् ।। १ ।।

W.-OPENING: नमिऊण जिनणाहं आणंतो तह गोयमो भयवं ।
अबुहाणबोहणत्थं धम्माधम्मं फलं पुच्छे ॥ २ ॥

W.-CLOSING: अडयालीसं पहुत्तरेहिं गाहाणं होइ चउसट्ठी ।
संखेवेणं भणिया गोयमपुच्छा महत्थावि ॥ ६४ ॥

Ct. CLOSING: श्रीजिनहर्षसूरीणां सुशिष्याः पाठका वराः ।
श्रीमत्सुमतिहंसाख्य तच्छिष्यैर्मतिवर्द्धनैः ॥ १ ॥
पाठकः(कैः)पदसंयुक्तैः कृता चेयं कथानिकाः ।
श्रीमद्गौतमपृच्छायाः सुगमाः सुखबोधकाः ॥ २ ॥
सिद्धौ रामे मुनौ चन्द्रे १७३८ वर्षेऽस्मिन्मार्गशीर्षके ।
श्रीमत्यां अगस्तारिख्यां नगर्यां च शुभे दिने ॥ ३ ॥

COLOPHON: इति श्रीगौतमपृच्छाया सुगमा वृत्ति समाप्ताः ।

Post-Colophonic: लिखितं श्री ६ श्रीपूज्यजी ऋ० श्री ६ श्रीचिन्तामणिजीतच्छिष्यपूज्यऋषि श्री-५ वेणाजी तच्छिष्य लिपीकृतं ऋषिरत्ना । संवत् १७५७ वर्षे ज्येष्ठकृष्णतृतीयायां गुरौ लिखितमिदं श्रीरस्तु ।

## 2409. गौतमपृच्छा बालावबोधसहिता

Ct. OPENING: (on f. 14) × × × नी आयुः स्थितीइं अरुणाभ नाम विमानइं च्यार स्त्री देवंगना ना भोगसंलीन देवता पणइ प्रवतरिम्रो । एहवी सुभकरणी समाचरइ ते जीव देवगती पामइ ।

Ct. CLOSING: तथा सीलांगरथजतीवर्गमुक्तवर्षे १८१० मधुमासे शुक्लपक्षे त्रयोदशी भृगुवासरे पूर्वाफा० नक्षत्रे सुभोऽयं ग्रन्थसमर्थितो मया । बाग्बरदेशे श्रीमत्तिरीपुरे श्रीमत्बृहत्पापक्षे श्रीतेजोरत्नसूरिरन्वये श्रीमत्कुमारसिंहनृपवरामारसिंहविरुदधारिमहोपाध्याय-श्री १०८ सहिजसुंदरजित्सीष्य उपाध्यायश्रीकान्तिसुन्दरेण स्वशिष्यस्य व्याख्यानाव-बोधार्थं ललितकथासंग्रहरूपा लिखिता ग्रथिता च । तासां विद्वद्भिः संशोध्य वाच्य-मिति मेऽनुग्रहं मन्ये । तथा ईणइ ग्रंथइं पृच्छा वीसनी कथा वीस, तिमज पृच्छा अट्ठा-वीसनी कथा चौद छइ । तथा कथा एक श्रीजिनवाणीनी छइ । ग्रन्थाग्र ४८३६ अनुष्टुप् छइ । यावच्चन्द्रसूर्योदयं तथा यावदागमवाणी संति तावच्चिरं नंदतु । श्री ।

## 2412. चारित्रसार-स्फुट-छन्दः श्लोकाः

OPENING: अथ फुटकर-श्लोक-छंद नवीन लिख्यते ।
आदीशं वृषभं नत्वा, मोक्षमार्गप्रकाशकम् ।
वृषाङ्कं वृषसिद्धस्य केवित्तलोकाम् वचाम्यहम् ॥ १ ॥

CLOSING:

इत्यादि दशधर्माणां व्याख्यानं लघुरूपकम् ।
चारित्राचारछायात: बुद्धिपूर्वं मया कृतम् ॥ १७७ ॥
चारित्रसारनामानं तस्या श्लोकमन्तिमम् ।
मुनिचामुण्डरायस्य कृतं च लिखितं मया ॥ १७८ ॥

छन्द-इन्द्रवज्रा

तत्त्वार्थराद्धान्तमहापुराणेष्वाचारशास्त्रेषु[च]विस्तरोक्तम् ।
आख्यात्समासादनुयोगवेदी चारित्रसारं रणरङ्गसिंहः ॥ १७९ ॥

भावार्थरूपश्लोक

तत्त्वार्थके च सिद्धान्ते महापुराणनामके ।
आचारसारविस्तारे व्याख्याते समासतः ॥ १८० ॥
अनुयोगेषु वेदी च चारित्रसारभूरणे ।
सिंहसादृशचामुण्डरायनामा मुनीश्वरः ॥ १८१ ॥
चारित्रसारशास्त्रं च मुनिश्रावकगोचरम् ।
आचर[ण]मयं रूपं सः समाप्तमिदं कृतम् ॥ १८२ ॥
सकलागमसम्पन्नः श्रीजिनसेननामकः ।
भट्टारकश्रुताभ्यासो संयमधारको महत्(हान्) ॥ १८३ ॥
तस्या पादप्रसादाच्च चामुण्डरायसंयमी ।
अनुयोगचतुर्वर्णः कृतचारित्रसारकम् ॥ १८४ ॥
संस्कृतमथवाक्यं च कठिनं च विशेषकम् ।
छन्दः प्रबन्धहीनत्वात् मन्दबुद्धौ न धार्यते ॥ १८५ ॥
तस्य श्लोकं मया कृत्वा सुगमा बुद्धिभाषिता ।
मात्रावर्णाच्च हीनत्वं बुधैः शोधनकारितुम् ॥ १८६ ॥
ग्रन्थमध्यादमी श्लोकाः केचित् कानि कारिता ।
पूर्वश्लोकाऽधुना कर्तुं वाञ्छया दैवयोगतः ॥ १८७ ॥
संवत्षट्द्विनवं रूपं (१९२६) मासि वैशाखशुक्लके ।
चाष्टम्यां तु तिथौ पूर्णं मध्या श्लोका कृता अमी ॥ १८८ ॥

COLOPHON: इति श्रीचारित्रसारग्रन्थमध्यात् कियन्ता छन्दश्लोकारूपकारिता, अमीचन्द्रेण श्रावक जयपुरमध्ये पंचायती दिवाण वधीचंद्रस्य मन्दिरस्थेन। संपूरण श्लोक-छंद ५५३

शिखर्णी छन्द ।

शुनीश्वानौ कामाकुलितमनसौ किञ्चन कृतं,
रथाधावाघातैः त्रुटितकटिकौ धूंसवि तनौ ।

मिलंतान्यान्यौ तत् हुङ हुङ कृतौ ज्ञानरहितौ
दृष्टं नाचाराङ्गं गवसिगलितौ जीवनमृतम् ॥

दु. वै. बु. ६ सं. १८२६ मै वण्यौ ।

## 2414. ज्ञानक्रियासंवादः

ॐ नमो जिनाय ।

श्रीमद्भिः कानि कानि तंत्राणि अधीतानि सन्ति यतो भवंतः कवयः श्रूयन्ते ?? श्रीमद्गुरुप्रसादादस्माकं सारस्वतो क्वचित् क्वचिच्छास्त्रे पर(?रि)चयो वर्तते । अस्मत्-पठितप्रश्नप्रयोजनं भवतां किम् ।२। युष्मद्वचनचातुरीपरीक्षार्थं पृच्छ्यतेऽस्माभिः ।३। अथावगतं मानसं भवतां, भवन्तोऽस्मदादिभिः सह भाषणोक्तिसमर्थाः सन्ति ।४। एवं तदर्थमेव समागताः स्मो वयं पार्श्वे ।५।

प्रकटितप्रभामण्डलसकललोकालोकप्रकाशकचारुकैवल्यसमालङ्कृत[गा]त्राऽऽप्तवक्त्र प्रसूतभारतीरतानां भव्यसत्वसामाजिकानामीदृग् मासं वर्तते, यज्जिनप्रवचनावचाधिरूढा वाचंयमाः शुद्धराद्धान्तसनाहादिसमायुक्ताः संतो वचनरचनाप्रपञ्चेन परस्परं तर्कवाद-पराः संबोभूयुः । तर्हि वयं तत्तर्कवादं श्रोतुकामाः स्मः । ततस्तेषां प्रमोदाय वयं क्षण-नाडिकादिमात्रं मिथो भाषणं कुर्मः ।६।

भोऽधिगतसिद्धान्तचारुचातुर्यसमालङ्कृतगात्रविशदमतयो वाचंयमाः श्रीमतां तर्क-वादकरणाशयोऽस्माभिः सह वर्तते । तदवसितः, इह सुरासुरनरतिर्यगादिसंकीर्णमनादि-पर्यवसितसंसारदुर्गे प्रवसंमानानां ज्ञातजीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्ष-नवतत्त्वानां सदैव सर्वसौख्यसम्पदुपेतसिद्धिवधूरक्तचेतसां विवेकिजनानां ज्ञानक्रियाभ्यास-करणं सततं परमानन्दकारणमस्ति । ततः समालोच्य भवद्भिर्ज्ञानक्रिययोर्द्वयोर्मध्ये यत्समी-चीनं तद्ग्राह्यम् । गृहीतपक्षैः सह तर्कवादः प्रवर्तते । ततस्तूर्णं पक्षग्रहणं कार्यम् ।७।

भो साधवोऽथ श्रूयताम् । यद् भवद्भिरुक्तं ज्ञानक्रिययोर्मध्ये यत् समीचीनं तद् ग्राह्यं, तदवगतम् । श्रीमतां वचो अस्माभिर्जगति विद्वज्जनसर्वदाऽभिमतं सकललोकव्यवस्थिता-शेषभावाऽऽविष्करणदक्षं प्रकटितनभसि तरुणरविकिरणमण्डलनिभं संसारजलधिप्रप-तज्जन्तूद्धरणक्षमं विदितसारेतरवक्षनरप्रकरालम्बनभूतं भूरिगुणोपेतं ज्ञानं अस्मदादी-नामङ्गीकर्तुं योग्यं तदेवाङ्गीकृतम् ।८।

अथाऽस्मद्वचांसि दत्ताऽवधानाः सन्तः शृणुत यूयम् । यद्भवद्भिर्ज्ञानमङ्गीकृतं तद-वसितमस्माभिः, परं स्वकीयकर्मक्षयोपशमप्रकटितया निपुणधिया विमृश्य वक्तव्यम् । अत्र अनाद्यपर्यवसिते सदैव विद्यमानेऽस्मिन् जगति कृतनिवासानां जन्तूनां कदाचन सम्भवं ज्ञानं न सर्वदा सहचारि तेनाङ्गीकृतेन युष्मदादीनां कथमर्थसिद्धिर्भविष्यति क्रियाऽस्मिन् विविष्टपे जीवानामनादिसंसिद्धा दृश्यते । ततः क्रियैव श्रेष्ठा, कथं ज्ञानं श्रेष्ठम् ? ।९।

भो: क्रियामताङ्गीकरणबुद्धे तवेदृशं चातुर्यमस्ति, ज्ञानेन समं किमपि वस्तु वर्ण्यते सद्भिः यतो ज्ञानं कुमतान्धकारस्फेटकं जगल्लोचनं विश्वोद्योतकारकं सूर्यातिशायि येन प्राप्तेनाऽवश्यमपाढं पुद्गलान्तरमनवधिसुखोत्पादकमनुपमं परमैश्वर्यगुणोपेतेन सकल-सत्वसुखकारकेण परमपुरुषसुरासुरनृपादिवन्दितचरणयुगलेन प्रोक्तं महानन्दपदं लभ्यते जे(?यं)न ज्ञानेन तेन समा क्रिया कदापि न स्यात् ।१०।

भो लब्धवर्ण ! त्वया केन हेतुना क्रियापक्षं निर्घाट्य केवलं ज्ञानस्यैव पक्ष एवाऽङ्गीक्रियते । किं त्वया विशिष्टगुणोपेतायाः क्रियायाः सामर्थ्यं नाभिज्ञायते ? यस्याः प्रभावेनाऽलब्धसम्यक्त्वेऽपि जीवः स्पर्शनरसनघ्राणचक्षुःश्रोत्राह्लान् मनोवाक्कायाऽऽल्हाद-कान् अविहति(हित) पुण्यप्रकरमनुजदुर्लभान् विहितसदाचारमानुष्यसुलभान् भोगान् मूंक्ते(? भुङ्क्ते) । एवंविधगुणोपेता क्रियाऽस्ति । तस्याऽग्रे ज्ञानस्य किमा-धिक्यम् ? ।११।

भो: कवे ! शृणु मदीयं वचः । परमानन्दपददायिकदक्षतरप्रकरोचितं सद्यः समी-हितसातकारकं दिव्यप्रभावयुक्तं ज्ञानमस्ति । तस्य गुणान् किं त्वं न जानासि ? झटिति वाञ्छितार्थसिद्धिप्रदायकस्य विशिष्टज्ञानस्याऽग्रे किं वराकी क्रिया ? सादिसपर्य-वसितसुखदायिनी । यथा प्रकटिते भास्करे किं बलं खजूंरा खद्योतवराकस्य ततो(तः) समालोचनीयं । नेह किमपि ज्ञानेन तुल्यं परोपकारिवस्तु विद्यते ।१२।

भो विचक्षण ! अथ शृणु, क्रियाया विशिष्टसामर्थ्यं, अस्मिन्ननादिसंसारे स्थिता-नामलब्धसम्यकृत्त्नां(त्नानाम्), अत एव सदैवाऽविशुद्धचेतसामभव्यानां क्रियासामर्थ्येन भवनपतिव्यन्तरज्योतिष्कसूरेषूत्पत्तिः स्यात् । कदाचित् सौधर्मेशानसनत्कुमारमाहेन्द्र-ब्रह्मलोकलान्तकमहाशुक्रसहस्राराऽऽनतप्राणताऽऽरणाच्युतकल्पेषु विशिष्टगीर्वाणसुखावाप्तिः स्यात् । कदाचित् तपोप्यदूंध्वभद्रसुभद्रजातसौमनसप्रियदर्शनसुदर्शनाऽमोघसुप्रतिबुद्ध-यशोधरेष्वहमिन्द्रत्वं परमसौख्यं भवति । ईदृक् क्रियासामर्थ्यमस्त्यवगतम् ।१३।

भो वाचंयमाः ! त्वया क्रियाऽधिकसामर्थ्यकथनेन ज्ञानगुणोल्लङ्घनं क्रियते, तदयुक्तं दृश्यते । यतोऽस्मिन् मनुष्यलोके क्रियाकारका बहवो विद्यन्ते साक्यादयस्तेषां मध्ये केचित् पञ्चाग्निसाधकाः सन्ति, केचित् पत्रपुष्पफलाहारेण सदैव तिष्ठन्ति, तथा केचित् शैवालभक्षिणः श्रूयन्ते, केचित् जलाश्रये पतितास्तिष्ठन्ति, केचिदूर्ध्वपादाऽधोव-क्त्रास्तिष्ठन्ति, केचिद्दिगम्बरा नग्नास्तिष्ठन्ति । एवंविधेनाऽपि कष्टेन तेषां तीर्थङ्करा-दिलब्धिर्न भवति । अथ श्रेणिकवासुदेवानां श्रूयन्ते, एकेनाऽपि ज्ञानेन तीर्थङ्करत्वं भविष्यति, तर्हि ज्ञानस्य माहात्म्यं प्रभूतं ज्ञायते न क्रियायाः । ततो ज्ञानपक्ष एवाङ्गीकार्यम् ।१४।

भो ज्ञानपक्षपातिन् ! निःकेवलनैकेन ज्ञानेन पूर्णं स्वर्गाऽपवर्गसुखसाधनं न भवेत्, द्वाभ्यामेकत्र वर्त्तमानाभ्यां वाञ्छितार्थसिद्धिः संजायते । यथा ऋषभादिजिनेश्वराणां ऋषभसेनप्रभृतिवाचंयमानां भरतादिचक्रवर्त्तीनां गौतमादिगणधराणां तथाऽन्येषामपि साधूनां प्राक्तनकाले निरन्तरं सुखावाप्तिर्बभूव । इदानीमपि वर्त्तमाने महाविदेहावौ वाञ्छितार्थसिद्धिर्भवति, भविष्यति कालेऽपि ज्ञानक्रियाभ्याममन्तानां क्षेत्रज्ञानां मनुजपुरेषु

महानन्दसुख भविष्यति । एतावता सुरेषु एकान्तमनन्तं सुखं भविष्यति । मनुजेषु महानन्दसुखमति भविष्यति । तत्र सिद्धिगमनसम्भवात् । ततो भवता ज्ञानक्रिययोर्यत्न विधेयम् । सर्वसम्पत्कारणमिदमस्ति एतन्निश्चयेन मन्तव्यम् ।१५। ज्ञानक्रियाभ्यां मोक्षः ।

COLOPHON: इति श्रीज्ञानक्रियासंवाद समाप्तम् ।

Post-Colophonic: सं० १७६८ वर्षे लिखितं पं० सुखानन्देन ।

## 2422. धर्मोपदेशश्लोकः सस्तबकः

OPENING: श्रीवीतरागाय नमः

ओमित्यक्षरमक्षरद्युतिधरं त्रैलोक्यगर्भं परं,
ब्रह्माकारमखण्डबिन्दुममलं नब्धार्द्धचन्द्रोर्द्ध्वगम् ।
मौलौ यद्घदर्कबिम्बरुचिरं ज्योतिस्तमस्तोमभित् ,
पञ्चानां परमेष्ठिनामपि पदं ध्यायामि हृत्पङ्कजे ॥१॥

ॐ शश्वज्जगतो हिताय परमानन्दाय चिन्मूर्त्तये ,
शान्तायाऽमिततेजसे भगवते सर्वोत्तमश्रीमते ।
कारुण्यामृतसिन्धुवृद्धिविधवे विज्ञानसद्वेधसे ,
देवेन्द्रव्रजवन्दिताय विभवे पार्श्वाय नित्यं नमः ॥२॥

नत्वा सर्वसतो जनांस्त्रिजगतीलोकोपकारे रतान् ,
विज्ञप्तिं विदधामि वाङ्मनसा तेषां पुरस्तादिमाम् ।
काव्यं मे प्रथयन्तु शुद्धमतयो धर्मोपदेशाभिधं ,
सूते रत्नमिहाकरस्तु भुवने तन्वन्ति तज्ज्ञा जनाः ॥३॥

CLOSING: क्षरत्येव नो कर्हिचित् स्वीयभावाद् विधत्ते सदाभ्यासयोगं स्वतत्त्वे ।
स चाऽऽत्मा न लिप्येत पङ्के भवाख्ये भवेन्निर्मलो वल्लभो नित्यलक्ष्म्याः ॥१०८॥
इति विमलरसाढ्यं मातृकावर्णपद्यं—
विरचितमिह काव्यं चारुधर्मोपदेशम् ।
प्रपठति वरबुद्धया यः पुमानर्थशुद्धं
स भवति कविलक्ष्म्या वल्लभः सज्जनानाम् ॥१०९।

COLOPHO: इति श्रीधर्मोपदेशः सम्पूर्णतां पफाण । श्रेयः

Post-Colophonic: संवदष्टरसेभेन्दुप्रमिते मार्गशीर्षके । मासे कृष्णसप्तमीया(म्यां) तिथौ च गुरुवासरे १ लि० हुकमिचन्द्रेण मक्सूदावाद

## 2451. वनस्पतिसप्ततिका सावचूरिः

OPENING: श्रीगौतमाय नमः

उसभाईए जिणिंदे पत्तेयमणंतगुणनिही नमिउं ।
पत्तेयाणंतवणस्सईणभेयं भणिस्सामि ॥१॥

व्याख्या—ग्रहं ऋषभादीन् जिनेन्द्रान् प्रत्येकं नत्वा प्रत्येकानन्तवनस्पतीनां भेदं भणिष्यामि। मकारोऽलाक्षणिकः। कथम्भूतान् जिनवरेन्द्रान् ग्रनन्तगुणनिधीन् ग्रनन्तानां गुणानां निधयो ग्रनन्तगुणनिधयस्तान् ॥ १ ॥

CLOSING: एवं पन्नवणाए पन्नवणाए लवो समुद्धरिउ।
भवियाणुग्गहकए सिरिमं मुनिचंदसूरीहि ॥ ७७ ॥

व्याख्या—एवममुना प्रकारेण श्रीमन्मुनिचन्द्रसूरिभिः भविकानुग्रहकृते प्रज्ञापनाया प्रकृष्टज्ञापनायाः प्रज्ञापनाया ग्रन्थस्य लवो(वः)समुद्धरितः ॥ ७७ ॥

COLOPHON: इति प्रज्ञापनोपाङ्गप्रथमपदाद्वनस्पतिकावचूरिःसम्पूर्णा। छ। शुभं भवतु।

## 2453. विचारामृतसंग्रहः

OPENING: श्रीवर्द्धमानसूर्यो जीयाद् यस्येह वचनकिरणगणाः।
ग्रप्रतिहतप्रचाराः प्रबोधमातन्वते जगताम् ॥ १ ॥
स्वान्ययोः संशयोच्छित्त्यै करोम्याप्तवचोऽम्बुधेः।
उदङ्कवत्परिमितंविचारामृतसंग्रहम् ॥ २ ॥

CLOSING: विश्वश्लाघ्यतपोगणाम्बरतलोल्लसत्पुष्पदन्तप्रभौ,
श्रीसोमप्रभसूरिसोमतिलकानूचानचूडामणी।
रूढप्रौढतदीयपट्टकमलाभृङ्गारहारोपमा,
विश्वाश्चर्यविधायिनिर्मलगुणग्रामाभिरामादया ॥ १ ॥
निस्सीमातिशया जयन्ति सततं सौभाग्यभाग्याद्भुताः,
सूरिश्रीगुरुदेवसुन्दरवरास्तेषां विनेयाणुकः।
सूरिश्रीकुलमण्डनोऽमृतमिव श्रीग्रागमाम्भोनिधे—
रुद्धक्रे चारुविचारसंग्रहमिमं रामाब्धिशक्राब्दके (१४४३) ॥ २ ॥

## 2454. विचारामृतसंग्रहः

OPENING: Same as at No. 2453

CLOSING: ग्रालोयणे वागरणस्स पुच्छणा पूयणा य सज्झाये।
ग्रवराहेय गुरूणं विणउ मूलं च वंदणायं ॥

ग्राव० चू० ग्रध्य० ५, इह मुखानन्तकप्रतिलेखनं वन्दनस्यादिकर्मतयोक्तं दृश्यते। वंदिउकामो इत्यनन्तरकथनात्। न चायं विधिः प्रतिक्रमणान्तर्गतवन्दनस्यैवेति वाच्यं। ग्रन्येषामपि वन्दनानामिहैकप्रकारेणैव भणनात्, ग्रपराधालोचनादिवन्दनानि ग्रावश्यकोक्तविधिना विधेयानीति। श्रावकाणां मुखवस्त्रिकारजोहरणग्रहणविचारः। छ। श्री।

COLOPHON: इति विचारामृतसंग्रहग्रन्थ समाप्तः।

## 2455. शत्रुञ्जयमाहात्म्यम्

OPENING: ॐ नमो वीतरागाय ।

ॐ नमो विश्वनाथाय विश्वस्थितिविधायिने ।
अर्हतेऽव्यक्तरूपाय युगादीशाय योगिने ॥ १ ॥
अर्हंश्चक्रि: श्रियो स्वामी चामीकरसमप्रभ: ।
स्तुत्य: सत्कृत्यलाभाय श्रीशान्ति: शुभतातिकृत् ॥ २ ॥
हेलान्दोलितदैत्यारिर्जरासन्धप्रतापहृत् ।
स्मरणीयं स्मरं कुर्वन् श्रीमन्नेमि पुनातु व: ॥ ३ ॥
यस्य दृष्टिसुधावृष्टिदानादहिरहीश्वर: ।
जातस्तापत्रयान्मुक्त: स श्रीपार्श्वो मुदेऽस्तुवम् ॥ ४ ॥
सुराद्रि सुरनाथस्य संशयापाननाय य: ।
अकम्पयत् त्रिधा वीर: श्रीवीर: श्रेयसेऽस्तु स: ॥ ५ ॥
श्रेय: श्रिय: पुण्डरीकं पुण्डरीकं शिवश्रिय: ।
पुण्डरीकशिरोरत्नं पुण्डरीकं नमामि तम् ॥ ६ ॥
जिनानादीश्वरमुखान् पुण्डरीकमुखान् मुनीन् ।
ध्यात्वा शासनदेवीं च कुर्वे सच्चरितोत्तमम् ॥ ७ ॥
श्रीयुगादिजिनादेशात् पुण्डरीको गणाधिप: ।
सपादलक्षप्रमितं नानाश्चर्यकरम्बितम् ॥ ८ ॥
श्रीशत्रुञ्जयमाहात्म्यं सर्वतत्त्वसमन्वितम् ।
चकार पूर्वं विश्वैकहिताय महितं सुरै: ॥ ९ ॥ युग्मम्
वर्द्धमाननियोगेन सुधर्मा गणभृत्तत: ।
ह्रस्वायुष्कान् नरान् जानन् तस्मात्संक्षिप्य तद्वधात् ॥१०॥
चतुर्विंशतिमाहस्रात्तस्मादालोड्य सारत: ।
स्याद्वादवादवशत: कुर्वन् बौद्धान् गलन्मदान् ॥११॥
सर्वाङ्गयोगनिपुणो सोगाभोगोऽपि निस्पृह: ।
नानालब्धिप्रबुद्धात्मा राजा गच्छैकमण्डनम् ॥ १२ ॥
सच्चारित्रपवित्राङ्गो वैराग्यरससागर: ।
श्रीमान् धनेश्वरःसूरि: सर्वविद्याविशारद: ॥ १३ ॥
शत्रुञ्जयोद्धारकर्त्तु रष्टादशनृपेशितु: ।
नानालब्धिप्रबुद्धात्मा राजा गच्छैकमण्डनम् ॥ १४ ॥
तत्प्रतिश्रान्तितुल्यं तन्माहात्म्यं सुखबोधकृत् ।
वक्ति शत्रुञ्जयस्याग्रेभक्त्या शृणुत हे जना: ॥ १५ ॥
पञ्चभि: कुलकम्

CLOSING : श्रीशत्रुञ्जयशैलराजमहिमाप्रोत्कीर्तनाद् यत्कृतं
पुण्यं तेन ममास्तु बोधिरसनो मिथ्यात्वनिर्नाशिनी ।
ऊनं वाप्यधिकं प्रमादवशतोऽज्ञानाद्यदुत्सूत्रम –
प्युक्तं तत्र ममास्तु दुष्कृतमहो मिथ्या जिनध्यान (तः) ॥ ४० ॥
मिथ्यात्वक्षणदाहरोऽरिविजयाज्जातप्रतापोत्करो
भव्योद्बोधकरोद्धुरं तदुरितध्वान्तश्रियस्तस्करः ।
गोभिस्तस्य विबोधिताङ्गिकमलः प्रोन्मीलदंशूज्वलः,
पाद्यावादिजिनो रविः प्रतिदिनं सिद्धोदयाद्रिस्थितः ॥ ४१ ॥

COLOPHON इत्याचार्यश्रीधनेश्वरसूरिविरचिते श्रीशत्रुञ्जयतीर्थमाहात्म्ये श्रीपार्श्वनाथादिमहापुरुषसच्चरितवर्णनो नाम चतुर्दशमः सर्गः । सम्पूर्णोऽयं ग्रन्थः ।

Post-Colophonic संवत् १५११ वर्षे ज्येष्ठवदि १० सोमे । प्राशापल्ल्या स्थाने । श्रीशत्रुञ्जयमाहात्म्ये लिखितपुस्तकमिदं शुभं भवतु । कल्याणं च । छ । श्रीः ।

## 81. सर्वग्रन्थोद्धारतत्त्वभागवतम्

OPENING : श्रीगुरुभ्यो नमः ।
सकलजन्मविभूतिरनेकधा प्रियसमागमसौख्यपरम्परा ।
नृपकुले गुरुता विमलं यशो भवति धर्मतरोः फलमीदृशम् ॥ १ ॥
आदौ सौभाग्यसौम्यञ्च त्यागी भोगी यशोनिधिः ।
भवतीत्यभिदानेभ्यः वरि (चिरं) जीवी निरामयम् ॥ २ ॥

CLOSING : इति सर्वग्रन्थोद्धारतत्त्वभागवते सोलश्मे स्कंदे आध्या० ५ मो समाप्तः ।
ओंकारं परमाद्भुतं त्रिजगतां देवाधिदेवं नमः,
परमेष्ठि परमेश्वरं परंपराः परमानन्दयोगिनाम् ।
सद्यो द्योतितम × × × × × ×

## 2483. सिद्धान्तसारप्रदीपकः

OPENING : ॐ ह्रीं नमः । श्रीसरस्वत्यै नमः । श्रीसद्गुरुभ्यो नमो नमः ।
श्रीमंतंस्त्रिजगन्नाथं सर्वज्ञं सर्वदर्शिनम् ।
सर्वयोगीन्द्रवन्द्याङ्घ्रि वन्दे विश्वार्थदीपकम् ॥ १ ॥
दिव्येन ध्वनिना येन कालादौ धर्मवृत्तये ।
लोकालोकपदार्थो वा विश्वे तत्त्वादिभिः समम् ॥ २ ॥
× × ×
यस्याः प्रसादतो मेऽभूत् सद्बुद्धिः श्रुतभूषिता ।
रागातिगा पदार्थज्ञा सद्ग्रन्थकरणे क्षमा ॥ २६ ॥

अन्ये ये गुरवो ज्येष्ठा दृग्विवृत्तादिसद्गुणैः ।
सर्वसिद्धान्तवेत्तारः कुन्दकुन्दादिसूरयः ॥ ३१ ॥

× × ×

विघ्नहान्यै च मङ्गल्या स्वान्यहितसिद्धये ।
वक्ष्ये ग्रन्थं जगन्नेत्रं सिद्धान्तसारदीपकम् ॥ ३५ ॥

× × ×

यत् प्राक्पूर्वमुनीन्द्राद्यैर्विश्वसिद्धान्तवेदिभिः ।
सद्बुद्धिभिर्जगत्सारं प्रोक्तं सिद्धान्तमञ्जसा ॥ ४० ॥

तद्दुर्गमार्थगम्भीरमागमं विश्वगोचरम् ।
कथं स्वल्पधिया प्रोक्तं मया शक्यं मनोहरम् ॥ ४१ ॥

अथवा प्राग्मुनीन्द्राणां प्रणामार्जितपुण्यतः ।
स्तोकंसारं प्रवक्ष्यामि सिद्धान्तं विश्वसूचकम् ॥ ४२ ॥

निजशक्त्या मुदाम्यस्य त्रैलोक्यसारदीपको ।
सुगमं बालबोधायान्याम्यग्रन्थाश्रमोद्भवान् ॥ ४३ ॥

CLOSING: एष ग्रन्थवरो जिनेन्द्रमुखजः सिद्धान्तसारादिकः,
दीपोऽनेकविधस्त्रिलोकसकलप्रद्योतने दीपकः ।
नानाशास्त्रपरान् विलोक्य रचितस्त्रैलोक्यसारादिकान्,
भक्त्या श्रीसकलादिकीर्त्तिगणिना सङ्घंगुणैर्नन्दतु ॥ १०२ ॥

न कीर्त्तिपूजाप्रवरेच्छया यश्च वा कवित्वाद्यभिमानयोगात् ।
किन्त्वात्मशुद्धयै परमार्थबुद्धया ग्रन्थः कृतः स्वान्यहिताय मुक्त्यै ॥१०३॥

अस्मिन् सिद्धान्तसारे त्रिभुवनकथके ज्ञानगूढार्थपूर्णे,
यत्किञ्चित्सन्धिमात्राक्षरपदरहितं प्रोदितं स्वल्पबुद्धया ।
अज्ञानाच्च प्रमादादशुभविधिवशादागमे वा विरुद्धं,
तत्सर्वं सारदे मा विशदमुनिगुणैः प्रार्थिता मे क्षमाऽस्तु ॥१०४॥

× × ×

सिद्धान्तसारार्थनिरूपणाच्छा सिद्धान्तसारार्थभृतो हि सार्था ।
सिद्धान्तसारादिकदीपकोऽयं ग्रन्थो धरित्र्यां जयतात् स्वसंघैः ॥१०५॥

× × ×

अस्मिन्ग्रन्थवरे त्रिकालविषये ये वर्णिताः श्रीजिनाः,
ग्रन्थादौ च नुताः समस्तजिनपाः सिद्धाश्च ये साधवः ।
ते सर्वे कृपया मया सुविमलं सम्पूर्णरत्नत्रयं,
सर्वांस्त्याश्च गुणान् समाधिमरणं दद्युः स्वशत्रोर्जयम् ॥११६॥

× × ×

एतत् सिद्धान्ततीर्थं जिनवरमुखजं धारितं श्रीगणेशैः,
वन्द्यं मान्यं सदार्च्यं त्रिभुवनपतिभिर्दोषदूरं पवित्रम् ।
अज्ञानध्वान्तहन्तृप्रवरमिह परं धर्ममूलं सुनेत्रं,
विश्वं लोके च भव्यैरसमगुणगणैर्यातु वृद्धिं शिवाय ॥ ११८ ॥

ग्रन्थेऽस्मिन् पञ्चचत्वारिंशच्छतश्लोकपिण्डिताः ।
षोडशाग्रबुधैर्ज्ञेया: सिद्धान्तसारशालिनी ॥ ११९ ॥

COLOPHON : इति श्रीसिद्धान्तसारप्रदीपमहाग्रन्थे पल्यादिमानवर्णनो नाम षोडशोऽधिकारः ।१५।

Post-Colophonic : संवत् १८११ का वर्षे शाके १६७६ प्रवर्त्तमाने मासोत्तममासे वैशाखमासे कृष्णपक्षे तृतीया ३ तिथौ भौमवासरे विशाखानामनक्षत्रे श्रीसाहिजिहानावादस्थ-श्रीजैसिंघपुरामध्ये श्रीमन्महावीरचैत्यालये पातिस्याह श्रीग्रहमदस्याहजी विजै छत्रे महाराजश्रीसवाई माधोसिंघजीराज्ये श्रीमूलसंघे बलात्कारगणे सरस्वतीगच्छे कुन्दकुन्दाचार्यान्वये भट्टारक शिरोमणीभट्टारक श्रीश्रीश्रीश्री १०८ श्रीदेवेन्द्रकीतिजी तत्पट्टे भट्टारकशिरोमणीभट्टारकजी श्रीश्रीश्रीश्री १०८ श्रीमहेन्द्रकीतिजी-तदाम्नाये पण्डितश्रीरूपचंदजी-तच्छिष्य पण्डितश्री दयारामे खण्डेलवालान्वये साहश्री लालचंदजी कासलीवाल तत्पुत्र माणिकचंद साहजी श्री सबलसिंहजी गंगवाल तत्पुत्र परागदास साहजी············अजमेरा तत्पुत्र जैचंद, त्रयो पुत्र माणिकचंद परागचंद जैचंद एतद् भव्यजीवसमुदायेन स्वज्ञानावरणीकर्मक्षयनिमित्तार्थं श्रीसिद्धान्तसारदीपकमहाग्रन्थ-श्रीपण्डितदयारामेण घटापितं महता दरेण पठनार्थं पण्डितश्रीमयारुचि: लिखितोऽयं ग्रन्थः यावच्चन्द्रार्कं चिरं नन्दतात् पुनरपि शिवं भूयात् लेखकपाठकाणां मङ्गलावलीश्रेयस्तात् शान्ति तुष्टि पुष्टि शिवं भवन्तु श्रीरस्तु ।

## 2498. सिन्दूरप्रकरणम् (सूक्तिमुक्तावली) बालावबोधसहितम्

OPENING : श्रीअर्हं नमः । श्रीगणाधिपत्यै नमः । श्रीसरस्वत्यै नमः । श्रीसद्गुरुभ्यो नमः । श्रीमाणभद्रवीराय नमः । सकलपण्डितोत्तम-प्रवरपण्डितश्री १०८ श्रीजयसौभाग्यजी तत्शिष्य पं । श्रीरामसौभाग्यजिद्गणिगुरुभ्यो नमः ।

W.

सिन्दूरप्रकरस्तपःकरिशिरःक्रोडे कषायाटवी –
दावार्चिनिचयः प्रबोधदिवसः प्रारम्भसूर्योदयः ।
मुक्तिस्त्रीवदनैककुंकुमरसः श्रेयस्तरोर्पल्लवः,
प्रोल्लासः क्रमयोर्नखद्युतिभरः-पार्श्वप्रभो पातु वः ॥ १ ॥

Ct.

श्रीशारदाचरणयुग्ममभीतपापं ध्याप्तं प्रणम्य परतः स्वगुरूंश्च नत्वा ।
वक्ष्याम्यहं विमतिसत्वहिताय सूक्त-मुक्तावलीप्रकरणं किल बालंपाऽत्र ॥

W. CLOSING :

अभजदजितदेवाचार्यपट्टोदयाद्रि —
द्युमणिविजयसिंहाचार्यपादारविन्दे ।

मधुकरसमतोयस्तेन सोमप्रभेण,
अरचि मुनिपराज्ञा सूक्तिमुक्तावलीयम् ॥ १०० ॥

Ct. CLOSING : सिन्दूरप्रकराभिधः शास्त्रस्यानेकसङ्गतार्थस्य ।
बालावबोधकरः पाठकवरराजशीलेन ॥ १ ॥
यदि सकूटं लिखितं मया किञ्चित्प्रमादतः ।
तत्क्षन्तव्यं क्षमाकारे मयि मूर्खे कृतकृपैः ॥ २ ॥

COLOPHON : इति श्रीसिन्दूरप्रकरबालावबोध सम्पूर्णम् ।

Post-Colophonic : सं० १८५२ वर्षे पं० क्षमासौभाग्यलिखितं । श्रीबांतानगरं ॥

## 2566. तत्त्वार्थसूत्रं सभाष्यम्

Ct. OPENING : नमो वाचकमुख्याय ।

सम्यग्दर्शनशुद्धं यो ज्ञानं विरतिमेव चाप्नोति ।
दुःखनिमित्तमपीदं तेन सुलब्धं भवति जन्म ॥ १ ॥
जन्मनि कर्मक्लेशैरनुबद्धेऽस्मिस्तथा प्रयतितव्यम् ।
कर्म्मक्लेशाभावो यथा भवत्येष परमार्थः ॥ २ ॥
परमार्थालाभे वा दोषेष्वारम्भकस्वभावेषु ।
कुशलानुबन्धमेव स्यादनवद्यं यथाकर्म्म ॥ ३ ॥

× × ×

ग्रन्थार्थवचनपटुभिः प्रयत्नवद्भिरपि वादिभिर्निपुणैः ।
अनभिभवनीयमन्यैर्भास्कर इव सर्वतेजोभिः ॥ २० ॥
कृत्वा त्रिकरणशुद्धं तस्मै परमर्षये नमस्कारम् ।
पूज्यतमाय भगवते वीराय विलीनमोहाय ॥ २१ ॥
तत्त्वार्थाधिगमाख्यं बह्वर्थं संग्रहं लघुग्रन्थम् ।
वक्ष्यामि शिष्यहितमर्हद्वचनैकदेशस्य ॥ २२ ॥

× × ×

नर्त्तेव मोक्षमार्गाद्धितोपदेशोऽस्ति जगति कृत्स्नेऽस्मिन् ।
तस्मात्परमिममेवेति मोक्षमार्गं प्रवक्ष्यामि ॥ ३१ ॥

इति सम्बन्धकारिकाः समाप्ताः ।

Ct. CLOSING : मुण्डपादशिष्यस्य शिष्येण वाचकाचार्यमलनाम्नः प्रथितकीर्तेः न्यग्रोधिकाप्रसूतेन विहरता पुरवरे कुसुमपुरनाम्नि कोभीषणिना स्वातिना स्वातिनयनेन वात्सीसुतेनार्हद्-वचनं सम्यग्गुरुक्रमेणागतं समुपधार्य । दुःखार्त्तानां च दुरागमविहितमतिं लोकमवलोक्य

इदमुच्चैर्नागरवाचकेन सत्वानुकम्पया दृष्टं,
तत्त्वार्थाधिगमाख्यं स्पष्टं उमास्वातिना शास्त्रम् ।
यः तत्त्वाधिगमाख्यं शास्यन्ति वा करिष्यते च तत्रोक्तं
सोऽव्याबाधसुखं प्राप्स्यत्यचिरेण परमार्थम् ॥

COLOPHON : तत्त्वार्थाधिगमे जिनप्रवचनसङ्ग्रहे भाष्यतः दशमोध्यायः समाप्तः । छ । श्री । छ । श्री । छ । शुभंभवतु । कल्याणमस्तु । छ । छ । श्रीः ।

Post-Colpohonic संवत् १६३१ वर्षे कात्तग वदि ८ वर शनै श्रीवंशे । रसोईया शाखायां । श्रे० सूरा भार्या रत्नादे पुत्र श्रे० ग्रासा भार्या घेघूसुत श्रे० डाहीयाभार्या रंगायी श्राविकार्याः पुत्रद्वयीः । प्रथमः सं० सीधर । द्वितीयः सं० देधरः । श्रीजीरिकापल्लिप्रभुश्रीग्रर्बुदा-चलादिमहातीर्थयात्रादिसत्क्षेत्रसफलीक्रियमाणवित्तः । चञ्चच्चन्द्रमरीचिचारुचित्तः सं० सीधरः समभूत् । तस्य निर्मतशीलालङ्कारधारिका श्रीदेवगुरुभक्तिकारिका खीमाई सुश्राविका समस्ति । तस्याः कुक्षिकमलिनीराजहंसोपमानौ सं० नगराज-वासानामानौ व्यवहारिणौ स्तः । तन्मध्ये सं० नगराजस्य गंगाचंगतरङ्गोरसम्यक्त्वशीलालङ्कारधारिणी अनन्यभाग्यसौभाग्यादिगुणगणसकलजनमनोहारिणी श्राविका लीलाई विजे जीयते । तत्कुक्षिसमुद्भवाः सं० कर्मसी सं० देवा सं० सहिजा सं० राजपालाभिधाःपुत्रास्सन्ति । तन्मध्ये सं० राजपाल भार्या मनाई । तत्कुक्षिसमुद्भवाभ्यां रत्ना रमा पुत्रीभ्यां तत्त्वार्थ-भाष्यपुस्तकं बहुव्ययपूर्वकं स्वश्रेयसे श्रीग्रञ्चलगच्छेश्वरश्रीश्रीधर्म्ममूर्तिसूरीश्वरविश-दोपदेशेन संलेख्य समर्पितं । वाच्यमानमाचन्द्राकं चिरं नन्दतात् नं० नाइग्रा लख्यतं ।

## 2567. तत्त्वार्थसूत्रं सटीकम्

नमो वाग्देवतायै ।

Ct. OPENING :

वीरं प्रणम्य तत्त्वज्ञं तत्त्वार्थस्य विधीयते ।
टीका संक्षेपतः स्पष्टा मन्दबुद्धिविबोधिनी ॥ १ ॥

सम्यगर्हत्प्रवचनमधिगम्य कालसंहननश्रद्धायुरादेः परिहाणिमवलोक्य सत्वानुकम्पया समासतो मोक्षमार्गमुपदेष्टुकाम आचार्य इदमाह ।

CLOSING : आसीद्द्विषगणी क्षमाश्रमणतां प्रापत्क्रमेणैव यो
विद्वत्सु प्रतिभागुणेन जयिना प्रख्यातकीर्तिर्भृशम् ।
बोढा शीलभरस्य सच्छु तनिधिर्मोक्षार्थिनामग्रणी—
र्जज्वालामलमुच्चकैर्निजतपस्तेजोभिरव्याहृतम् ॥ १ ॥

यत्र स्थितं प्रवचनं पुस्तकनिरपेक्षमक्षितं विरलम् ।
शिष्यगणसंप्रदेयं जिनेन्द्रवक्त्राद्विनिःक्रान्तम् ॥ २ ॥
तस्याऽभूत् परवादिनिर्जयपटुः सैंही दधच्छूरतां,
नाम्ना व्यश्रुत सिंहसूर इति च ज्ञाताखिलार्थागमः ।

शिष्यः शिष्टजनप्रियः प्रियहितव्याहारचेष्टाश्रयाद्,
भव्यानां शरणं सघोषपतनक्लेशार्दितानां भुवि ॥ ३ ॥

निर्द्धूततमसंहतिरखण्डमण्डलशशाङ्कसच्छाया ।
अद्यापि यस्य कीर्तिभ्रमति दिगन्तानि विश्रान्ता: ॥ ४ ॥

शिष्यस्तस्य बभूव राजकशिरोरत्नप्रभाजालक—
व्यासङ्गच्छुरितस्फुरन्नखमणिप्रोद्भासिपादद्वयः ।
भाः स्वामीति विजित्य नाम जगृहे यस्तेजसां सम्पदाः,
भास्वन्तं भविभिर्जयोद्यतमतिर्विद्वज्जनाग्रेसरः ॥ ५ ॥

क्षमया युक्तो तुलया समशास्त्रार्थविन्महाश्रमणः ।
गच्छाधिपगुणयोगाद् गणाधिपत्यं चकारार्यम् ॥ ६ ॥

तत्पादरजोऽवयवः स्वल्पागमधीमुषीकबहुजाड्यः ।
तत्त्वार्थशास्त्रटीकामिमां व्यधात् सिद्धसेनगणिः ॥ ७ ॥

नमो सुयदेवयाए भगवईए ।
अष्टादशसहस्राणि द्वे शते च तथा परे ।
अशीतिरधिका ह्यस्यां टीकायाः संग्रहः कृतः ॥

श्रीः ग्रन्थाग्रं १८२८२ । छ । शुभंभवतु । कल्याणमस्तु ।

COLOPHON : [The following after "सं० राजपाल भार्या मनाई" is in additon to the Colophon which agrees with that in no. 2566.

Post-Colophonic : सं० राजपालभार्या मनाई नाम्न्या कुक्षिसमुद्भूते श्रा० रत्नां रमांम्यां तत्त्वार्थटीका-पुस्तकं संलेख्य श्री ५ श्रीधर्म्ममूर्त्तिसूरीश्वराणां समर्पितं वाच्यमानमाचन्द्रार्कं चिरं नन्दतात् । पं० सपातान् लख्यंतं ।

## 2594. न्यायदीपिका

OPENING : ॐ नमः सिद्धेभ्यः ।

श्रीवर्द्धमानमर्हन्तं नत्वा बालप्रबुद्धये ।
विरच्यते मितस्पष्टसन्दर्भन्यायदीपिका ॥ १ ॥

COLOPHON इति श्रीमद्वर्द्धमानभट्टारकाचार्यगुरुकारुण्यसिद्ध-सिद्धसारस्वतोदयश्रीमदभिनवधर्म्म-भूषणाचार्यविरचितायां न्यायदीपिकायामागमप्रकाशः समाप्तः । समाप्ता चेयं न्याय-दीपिका । छ । इति श्रीसमाप्ता । शुभंभवतु । कल्याणमस्तु । श्रीरस्तु ।

जयन्त हन्त का तत्र गणना त्वयि कीटके ।
यस्यां च शक्तिसंसिद्धो मञ्जरयुदयनद्विपः ॥ १ ॥

शा०ना यदि शब्दार्थो नियोगो नेति का कथा ।

## 2609. प्रवचनसारोद्धारः सटीकः

Ct. OPENING : अर्हम् ।

समर्द्धैरपि यत्तमोरिरखिलै ………कुत्रचि-
ञ्चञ्चत्कालकलाभिरप्यनुकलं यन्नीयते न क्षयम् ।
तेजोभिः स्फु रतैः परैरपि हठादाक्रम्यते यत्र त-
ज्जैनं सर्वजगत्प्रकाशनपटुज्योतिष्परं नन्दतु ॥ १ ॥

यो ध्यानेन विमूलकाषमकषद् द्वेषादिविद्वेषणो,
यस्त्रैलोक्यविलोकनैकरसिक…किमप्याततनोत् ।
य :सद्भूतमदोषमर्थमवदत् दुर्वादिविश्रासकृद्-
देवार्यः शिवतातिरस्तु स विभुः श्रीवर्द्धमानस्सताम् ॥ २ ॥

स्वगुरूणामादेशं चिन्तामणिसोदरं समासाद्य ।
श्रेयस्कृते करोमि प्रवचनसारस्य वृत्तिमिमाम् ॥ ३ ॥

Ct. CLOSING : धम्मधरुद्धरणमहावराह जिणचंदसूरिसिस्साण ।
सिरिअम्मएवसूरीण पायपंकयपराएहिं ॥ १ ॥

सिरिविजयसेणगणहरकणिट्ठजसदेवसूरिजेट्ठेहिं ।
सिरिनेमीचंदसूरिहिं सविणयं सिस्सभणिएहिं ॥ २ ॥

समयरयणायराओ रयणाइंपि वसयच्छदाराइं ।
निउणनिहाणपुव्वं गहिउं संजत्ति एहिं च ॥ ३ ॥

पवयणसारुद्धारो रइओ सपरावबोहकज्जम्मि ।
जंकिंचि इह अजुत्तं बहुस्सुया तं विसोहंतु ॥ ४ ॥

जाव जयइ भुवणत्तयमेयं रविससिसुमेरुगिरिजुत्तं ।
पवयणसारोद्धारो नंदउ बुह पढिज्जंतो ॥ ५ ॥

Ct. CLOSING : ग्रंथाग्रं । छ। १६००० ।छ।
& COLOPHON: इति श्रीसिद्धसेनसूरिविरचिता प्रवचनसारोद्धारवृत्तिः समाप्ता ।

सिद्धान्तादिविचित्रशास्त्रनिकरव्यालोकनेन क्वचित्,
क्वाप्यास्तीय गुरूपदेशवसतः स्वप्रज्ञया कुत्रचित् ।
ग्रन्थेऽस्मिन् गहनेऽपि शिष्यनिवहैरत्यर्थमभ्यर्थितः,
तत्वज्ञानविकाशिनीमहमिमां वृत्तिं सुबोधां व्यधाम् ॥ १ ॥

मेधामंदतया बलाबलतया चित्तस्य शिष्यावली,
शास्त्रार्थप्रतिपादनादिविषयव्याक्षेपभूयस्तया ।
यत्सिद्धान्तविरुद्धमत्र किमपि ग्रन्थे निबद्धं मया,
तद्भूत्वावहितैः प्रपञ्चितहितैः शोध्यं सुधीभिः स्वयम् ॥२॥

श्रीचन्द्रगच्छगगने प्रकटितमुनि ण्डलप्रभाविभव: ।
उदगाम्नवोनमहिमा श्रीमदभयदेवसूरिरवि: ॥ १ ॥
तार्किकागस्त्यविस्तारि सत्प्रज्ञाचुलुकैश्चिरम् ।
वर्द्धते पीयमानोपि यस्य वाङ्महार्णव: ॥ २ ॥
तदनु धनेश्वरसूरिर्जज्ञे या प्राप पुण्डरीकाक्ष: ।
निर्मथ्य वादजलधि जयश्रियं मुञ्जनृपपुरत: ॥ ३ ॥
भास्वान्नभूप्रवीन: श्रीमज्जिनसिंहसूरिरथ यस्य ।
तपसोल्लासितमहिमा ज्ञानोद्योत: क्व न स्फुरित: ॥ ४ ॥
श्रीवर्द्धमानसूरिस्तत: परं गुणनिधानमजनिष्ट ।
प्रतनिष्ट सोममूर्त्तेरपि यस्य सदा कलाध्वंसम् ॥ ५ ॥
अथ देवचन्द्रसूरि: श्रीमान् गोभिर्जगज्जनं चिन्वन् ।
रजनीजानिरिवाजनि नास्पृश्यत य: परं तमसा ॥ ६ ॥
श्रीचन्द्रप्रभमुनिपतिरवतिस्म तत: स्वगच्छमच्छमता: ।
प्रबलेन येन महता सुचिरं चक्रे क्षमोद्धरणम् ॥ ७ ॥
अथ भद्रभुवोऽभूवन् श्रीभद्रेश्वरसूरय: ।
यदघुविधुताराणि तपांसि च यशांसि च ।
शिष्यास्तेषामभवन् श्रीमदजितसिंहसूरय: ।
शमिन: भ्रमरहितै: कुसुमैरिव शिरसि सदा यै: स्थितं गुणिनाम् ॥८॥
श्रीदेवभद्रसूरिप्रभवोऽभूवन्नवोन्मथितमोहा: ।
सूरिषु रेखा येषामाद्यैव ब[भूव] भूवलये ॥ १० ॥
अत्र प्रमेयप्रमेयोर्मिनिर्ममेऽर्णवसन्निभ: ।
यै: प्रमाणप्रकाशोऽयं मथ्यते विबुधैर्ननु ॥ ११ ॥
श्रीश्रेयांसचरित्रादिप्रबन्धाङ्गणसङ्गिनी ।
यद्वाणीलास्यमुल्लास्य कस्य नो मुदमादधे ॥ १२ ॥
प्रभावैभवजृम्भणादहर [ह] र्दैवेज्यसब्रह्मभि-
र्यैर्वाग्ब्रह्मविनेयवृन्दहृदयक्षेत्रान्तरुप्तं तथा ।
नित्याभ्यासघनाम्बुवृष्टिघटनादङ्कुरितं पूर्णता-
मायातं फलति स्म वादिविजयैर्दत्तप्रमोदं यथा ॥ १३ ॥
माप्लाव्यंत कति स्म यो दुरधियो यद्गद्यगुम्फोर्मिभि-
र्यद्वाग्वैभवभङ्गिभि: कति न हि प्राप्यन्त हर्षं नृपा: ।
यत्तीव्रव्रतमुद्रया कति न वानीयन्त विप्रं जना-
यद्वा किं बहुजल्पितेन निखिलं यद्वृत्तमत्यद्भुतम् ॥ १४ ॥
तेषां सुशिषु मुख्यो शिष्य: श्रीसिद्धसेनसूरिरिमाम् ।
प्रवचनसारोद्धारस्य वृत्तिमकरोदतिस्पष्टम् ॥ १५ ॥
करसागररविसंख्ये श्रीविक्रमनृपतिवत्सरे चैत्रे ।
पुष्यार्कदिने शुक्लाष्टम्यां वृत्ति: समाप्तासौ ॥ १६ ॥

तारकमुक्तो ले० शशिकलशो गगनमरकतच्छत्रं ।
दण्ड इव भवति यावत् कनकगिरिर्जयतु तावदियम् ॥ १७ ॥

सूत्रसमं सर्वसंख्यायां ग्रन्थाग्रं ।छ। १८००० प्रवचनसारोद्धारसूत्रसहितवृत्तिपुस्तकं समाप्तम् ।

Post-Colophonic :

संवत् १६५७ वर्षे ज्येष्ठ शुदि ६ बुधवासरे उ० रु लिखितं ।छ।

[ In a different hand writing ]

श्रीमानर्बुदपर्वतप्रभुरभूत् भूमान् सुरत्राणभूः,
सत्याह्वो भुवि राजसिंह इति यो रामावतारः परः ।
श्रीमानक्षयराजराजतिलकः प्राज्यप्रतापानल-
स्तत्पुत्रोद्भुतभाग्यभूमिरधुना बालोपि पाति क्षितिम् ॥१॥
तस्य श्रीमनरंगदे प्रियतमश्रीसाधुपूज्जायुतः
प्राग्वंश्यः सचिवाग्रणीर्विजयते श्रीतेजपालाभिधः ।
बस्ताह्वयोऽपि च वर्द्धमान इति सत्पुत्रद्वयीसंयुतो,
राज्यस्तम्भनिभः समस्तभुवनप्रख्यातकीर्तिव्रजः ॥ २ ॥
यात्रां श्रीविमलाचलस्य महता सङ्घेन साडम्बरं,
द्वेधाभूततपागणस्य सुचिरादैक्यं च योऽकारयत् ।
सन्मानं च मिथो विधाय भृतवान् यो बोधिलक्ष्म्याङ्गिनः,
स्वात्मानं सुकृतश्रिया च यशसा द्यावापृथिव्यन्तरम् ॥३॥

तेन श्रीतपगच्छनायकगुरुश्रीहीरसूरीशितुः,
संघे श्रीमदुपासकेन नगरे श्रीरोहिणीनामनि ।
वर्षे विक्रमतःक्षमावसुरसक्ष्मासम्मिते १६८१ वत्सरे,
चिरकोशे स्वकृते चिरं विजयतामेषा गृहीता प्रतिः ॥४॥

## 2656. सूक्ष्मार्थविचारसारोद्धारप्रकरणं सटीकम्

Ct. OPENING :

कर्मबन्धोदयोदीर्णसत्तावैचित्र्यवेदिनम् ।
कर्मस्तवस्य टीकेयं नत्वा वीरं विरच्यते ॥ १ ॥

Ct. CLOSING :

जिणवल्लहगणिलिहियं सुहमत्थवियारलवमिणं सुयणा ।
निसुणंतु गुणंतु सुयं परेवि बोहिंतु सोहिंतु ॥ १५३ ॥

शास्त्रान्तरेषु परिवीक्षितमर्थजातं प्रायो मया विवृतमत्र न तु स्वबुद्ध्या ।
यत्स्यात्तथापि न तु सूत्रविरुद्धमुक्तं तत्सूरिभिर्मयि कृपाकलितैर्विशोध्यम् ॥ १ ॥

यस्मादृगक्षीरतरसूक्ष्मपदार्थजाते क्षुधावृतस्य नितरां विदुषोऽपि बुद्धिः ।
प्रायबलता(?)वृद्धशास्त्रपरिश्रमाणां कर्मोदयाज्जडधियां किमु मादृशानाम् ॥२॥

सम्पूर्णनिर्मलकलाकलिकंसदैव जाड्येन वर्जितमखण्डितवृत्तभावम् ।
दोषानुषङ्गरहितं नितरां समस्ति चान्द्रं कुलं स्थिरमपूर्वशशाङ्कतुल्यम् ॥ ३ ॥
तस्मिन्नचरित्रधनधामतया यथार्थः संजज्ञिरे ननु धनेश्वरसूरिवर्याः ।
नीहारहारहरहासविकाशिकाशसंकाशकीर्त्तिनिवहैर्धवलीकृताशाः ॥ ४ ॥
ये निःसङ्गविहारिणोऽमलगुणा विश्रान्तविद्याधर-
व्याख्यातार इति क्षितौ प्रवदिता विद्वन्मनोमोदिनः ।
[स्वा] नुष्ठानिजनेषु साम्प्रतमपि प्राप्तोपमाः सर्वत-
स्तेभ्यस्तेऽजितसिंहसूरय इहाऽभूवन् सतां सम्मताः ॥ ५ ॥
उद्दामधामभवजन्तुनिकामवामकामेभकुम्भतटपाटनसिंहपोताः ।
श्रीवर्द्धमानमुनिपाः सुविशुद्धबोधास्तेभ्योऽभवन् विशदकीर्त्तिवितानभाजः ॥ ६ ॥
लोकानन्दपयोधिवर्धनवशात् सद्वृत्तनासङ्कृतेः,
सौमित्त्वेन कलाकलापकलनात् श्लाघ्योदयत्वेन च ।
ध्वस्तध्वान्ततया ततो समभवंश्चन्द्रान्वयं सान्वयं
कुर्वाणा शुचिशालिनोऽत्र मुनिपाः श्रीशीलभद्राभिधाः ॥७॥
निःसंख्यैरपि लब्धमुख्यगणनैराशाविकाशासनां,
पूर्णैरपि संकटीकृतदिगाभोगैर्गुणिग्रीणकैः ।
श्वेतैरप्यनुरञ्जितत्रिभुवनैर्येषां विशालैर्गुणैः,
चित्रं कोऽपि यशःपटः प्रकटितः श्वेतो विचित्रैरपि ॥८॥
मत्तर्ककर्कशधिया सुविशुद्धबोधाःमुव्यक्त...स्वक्तशतमौलिकल्पाः ।
तेषामुदारचरणाः प्रथमाः सुशिष्याः सद्योऽभवन्नजितसिंहमुनीन्द्रवर्याः ॥ ९ ॥
तेषां द्वितीयशिष्या जाताः श्रीमद्धनेश्वराचार्याः ।
सार्द्धशतकस्य वृत्तिं गुरुप्रसादेन ते वक्तुः ॥ १० ॥
शशि मुनिपशुपतिसंख्ये वर्षे विक्रमनृपादतिक्रान्ते ।
चैत्रे सितसप्तम्यां समर्थितेयं गुरौ वारे ॥ ११ ॥
युक्तायुक्तविवेचनसंशोधनलेखनैकदक्षस्य ।
निजशिष्यस्य सुसाहाय्याद् विहिताऽसौ पार्श्वदेवगणेः ॥ १२ ॥
प्रथमादर्शे वृत्तिं समलिखतां प्रवचनानुरागेण ।
मुनिचन्द्रविमलचन्द्रौ गणी विनीतौ...... ॥

## 2660. स्याद्वादमञ्जरी

Ct.- OPENING : ॐ नमः सर्वज्ञाय ।

यस्य ज्ञानमनन्तवस्तुविषयं यः पूज्यते दैवतै-
नित्यं यस्य वचो न दुर्नयकृतैः कोलाहलैर्लुप्यते ।
रागद्वेषमुखा द्विषां च परिषत् क्षिप्ता क्षणाद् येन सा
स श्रीवीरविभुर्विधूतकलुषां बुद्धिं विधत्तां मम ॥ १ ॥

निस्सीमप्रतिभैकजीवितधरौ निःशेषभूमिस्पृशां
पुण्यौघेन सरस्वती सुरगुरूस्वाङ्गैकरूपौ दधत् ।
यः स्याद्वादमसाधयन् निजवपुर्दृष्टान्ततः सोऽस्तु मे,
सद्बुद्ध्यम्बुनिधिप्रबोधविधये श्रीहेमचन्द्रप्रभुः ॥ २ ॥
ये हेमचन्द्रं मुनिमेतदुक्तग्रन्थार्थसेवामिषतः श्रियन्ते ।
सम्प्राप्यते गौरवमुज्ज्वलानां पदं कलानामुचितं भवन्ति ॥ ३ ॥
मातर्भारति सन्निधेहि हृदि मे येनेयमाप्तस्तुते-
र्निर्मातुं विवृतिं प्रसिद्ध्यति जवादारम्भसम्भावना ।
यद्वा विस्मृतमोष्ठयोः स्फुरति यत्सारस्वतः शाश्वतो
मन्त्रः श्रीउदयप्रभेति रचना रम्या मनोऽहर्निशम् ॥४॥

इह हि विषमदुःषमारजनितिरस्कारभास्करानुकारिणा वसुधानलावतीर्णसुधासारिणीदेश्यदेशनावितानपरमार्हतीकृतश्रीकुमारपालक्ष्मापालप्रवर्तिताभयदानदानाभिधानजीवातुसंजीवितनानाजीवप्रदत्ताशीर्वादमाहात्म्यकलाविधिस्थायिविशदयशःशरीरेण निरवद्यचातुर्विधनिर्माणैकब्रह्मणा श्रीहेमचन्द्रसूरिणा जगत्प्रसिद्धश्रीसिद्धसेनदिवाकरविरचितद्वात्रिंशद्द्वात्रिंशिकानुसारिश्रीवर्द्धमानजिनस्तुतिरूपमयोगव्यवच्छेदाऽन्ययोगव्यवच्छेदाभिधानं द्वात्रिंशिकाद्वितयं विद्वज्जनमनस्तत्त्वावबोधनिबन्धनं विदधे । तत्र च प्रथमद्वात्रिंशिकाया सुखोन्नेयत्वात् व्याख्यानमुपेक्ष्य द्वितीयस्या निःशेषदुर्वादिपरिषदधिक्षेपदक्षायाः कतिपयपदार्थविवरणकरणेन स्वस्मृतिबीजप्रबोधविधिर्विधीयते । तस्याश्चेदमादिकाव्यं अनन्तविज्ञानमित्यादि ।

C: CLOSING : समाप्ता चेयमन्ययोगविच्छेदद्वात्रिंशिकास्तवनटीका ।

येषामुज्ज्वलहेतुहेतिरुचिरप्रामाणिकाध्वस्पृशां,
हेमाचार्यसमुद्भूवस्तवनभूरर्थः समर्थः सखा ।
तेषां दुर्नयदस्युसंभवभयास्पृष्टात्मनां संभव-
त्यायासेन विना जिनागमपुरप्राप्तः शिवः श्रीप्रदः ॥१॥
चातुर्विद्यमहोदधेर्भगवतः श्रीहेमसूरेर्गिरां,
गम्भीरार्थविलोकने यदभवद् दृष्टिः प्रकृष्टा मम ।
द्राघीयः समयादराग्रहपराभूतप्रभूतावसं,
सम्यक् गुरुपादरेणुकणिकासिद्धाञ्जनस्योर्जितम् ॥ २ ॥

× × ×

नागेन्द्रगच्छगोविन्दवक्षोऽलङ्कारकौस्तुभाः ।
त्रिविश्ववन्द्या नन्द्यासुरुदयप्रभसूरयः ॥ ६ ॥
श्रीमल्लिषेणसूरिभिरकारि तत्पदगगनदिनमणिभिः ।
वृत्तिरियं मनुरविमितशाकाब्दे दीपमहसि शनौ ॥ ७ ॥
श्रीजिनप्रभसूरीणां साहाय्योद्भिन्नसौरभा ।
श्रुतावुत्तंसतु सतां वृत्तिः स्याद्वादमञ्जरी ॥ ८ ॥

विश्राणे कलिनिर्ज्याजिज्ञनुभा श्रीहेमचन्द्रप्रभो,
तद्दृब्धस्तुतिनिर्वृतिर्निमितिमिषाद् भक्तिर्मयाविष्कृता ।
निर्णेतुं गुणदूषणे निजगिरां तत्प्रार्थये सज्जनात्,
तस्यास्तत्त्वमवेक्षत्रिभावहुमतिः सास्त्यत्र सम्यक्यतः ॥६॥

COLOPHON: इति श्रीस्याद्वादमञ्जरी ग्रन्थः ३००० समाप्ताः ।छ।

Post-Colophonic: संवत् १५२१ वर्षे वैशाखवदि ४ भौमे लिखितं । श्रीशिवमस्तु । कल्याणं भूयात् ।छ।

## 2705. चित्रसेन-पद्मावतीकथा सस्तबका

OPENING: श्रीगुरुभ्यो नमः ।

नत्वा जिनपतिमाद्यं पुण्डरीकं गणाधिपम् ।
शीलालङ्कारसंयुक्तां साश्चर्यां तत्कथां ब्रुवे ॥ १ ॥

CLOSING: युग्मे च युग्मे स्मरवारचन्द्रे संवत्सरे चाश्विनिमासनाम्नि ।
त्रयोदशीकृष्णशनिश्चरे च कथा कृता शीलमुदाहृतेन ॥ २ ॥
श्रीधर्मसूरिस्तदनुक्रमेण श्रीमूलपट्टे च समागतेन ।
श्रीपद्मसूरिस्वगुरुसंघे(?). दद्यात् शिवः श्रीमहीचन्द्रसूरिः ॥७॥
शिष्यस्तदीयो महिमानिधानः चरित्रपात्रः स्वगुणो निधानः ।
पद्मावतीशीलगुणास्यकीर्तने करोति[वै]पाठकराजवल्लभः ॥६॥

COLOPHON: इति श्रीशीलविषये चित्रसेनपद्मावतीकथा सम्पूर्णं । सूत्र ग्रन्थाग्रंथ ५०६ ।

W. Post-Colophonic: संवत् १८४६ मिति आसोजसुद ७ पंडत श्रीश्रीश्रीमयाचंदजी पूज्यगुरांजी श्री श्रीथिरपालजी लिख्यतुं ऋ, चन्द्रभाणकेन । विदासर मध्ये । श्रीकल्याणमस्तु । श्रीरस्तु ।

Ct. ": संवत् १८४६ मिति आसोजसुद दसमी १० दिने नवरतादिने सोमवारे टबा ग्रन्थ लिख्यो छै गच्छ बृहत्लुंकागच्छे पुज्यआचार्यजी श्रीश्रीश्री रामसिंघजी तच्छिष्य पं० प्रवर पुज मयाचन्द्रजी तत्शिष्य स्थिरपाल सिष्य ऋ० तत्लघुशिष्य चंद्रभाण वाचना अर्थे श्रीथलवटदेसे ग्राम विदा(स)रमध्ये चोमासं कृत्व श्री ।

## 2763. विद्याविलासकथा

OPENING: सपो विजयलक्ष्मीकं कार्मणं भुवनश्रियः ।
धर्मरोहणमाणिक्यं कर्मकक्षासुशुक्षिणः ॥ १ ॥

ऐश्वर्यराज्यं गुणिमा समन्वितः विद्याविलासो विभवेषु पूरितः ।
कलानिधिः सौख्यनिधिः समाधिना धर्मेण राज्ञा स्वजनैश्च पूजितः ॥२॥

COLOPHON: इति विद्याविलासकथासम्पूर्णानि समाप्तिः ।छ। शुभं भवः

Post-Colophonic: संवत् १६०९ मिती ज्येष्ठशुक्लसप्तमी ७ धर्मोसरवासरे ।

## 2766. शालिभद्रचरित्रम्

OPENING:
(on f. 2)

[सक]लोत्तरगुणग्रामसङ्कुतिर्मातृभक्तिभाक् ।
निशासु सुखशय्या(य्या)यां स साधुरिव लीयते ॥३५॥ युग्मम्

अन्यदापश्यदुत्पश्यः पर्वणि क्वापि बालकः ।
कदन्नभोजनस्तत्र परमान्नं गृहे गृहे ॥३६॥

CLOSING :

श्रीनागेन्द्रमुनीन्द्रवंशविपुले क्षीरार्णवेरावणाः,
श्रीहेमप्रभसूरयः प्रसमरश्रीकीर्त्तिसंरोविणा ।
तत्पट्टे प्रभुधर्मघोषगुरवो रेजुः स्फुरद्गौरवाः,
श्रीसोमप्रभसूरयस्तरणयस्तत्पट्टपूर्वाचले ॥ ४८ ॥
ब्रह्माणः किल भारती श्रितवती यत्कण्ठपीठी मठी,
गोविन्दाः कमला यदंह्रिकमला सेवासु हेवाकिनी ।
ईशानाः किमु गङ्गयेव महिता गौर्या सुकीर्त्या च ये,
श्रीसोमप्रभसूरयः सुमनसां मूर्द्धन्यतां ते दधुः ॥४६॥
तत्पट्टाचलचूलिका विजयते दम्भाख्यजम्भाजित-
श्रीः श्रीमान्विबुधप्रभुः प्रभुरसौ सुज्ञानलीलाश्रयः ।
तस्य प्राप्य निदेशलेशमनिशं गीर्देवताध्यानत-
श्चक्रे धर्मकुमारसाधुरमलां श्रीशालिलीलाकथाम् ॥५०॥
इयं कथा वृद्धकुमारिकेव सद्भूषणवर्जिताऽऽसीत् ।
प्रद्युम्नदेवस्य परं प्रसादाद् बभूव पाणिग्रहणस्य योग्या ॥५१॥
प्रभाचन्द्रेण गणिना गुणगौरवशालिना ।
अलेखि प्रथमादर्शं भक्तिव्यक्तिनिदर्शनम् ॥ ५२ ॥
यावद्दानदिवाकरः शुभदिनश्रीसौविदल्लोर्हत-
स्तीर्थे पूर्वगिरावुदेति तिमिरध्वंसी विवेकारुणः ।
स्फोता तावदियं यतिक्षितिपतेः श्रीशालिभद्रप्रभो-
र्बुद्धैर्बोधकरैः सुमङ्गलकला भोगावली कीर्त्यताम् ॥५३॥
श्रीशालिचरिते धर्मकुमारसुधिया कृते ।
श्रीप्रद्युम्नविया शुद्धे सप्तमः प्रक्रमोऽभवत् ॥५४॥
अयं दानमहाधर्मकल्पद्रुम इवाद्भुतः ।
भूयात् समस्तभव्यानां मनोवाञ्छितसिद्धये ॥ ५५ ॥
ब्राह्मी निर्मलशब्दसिद्धिकलिता म (बा)न्येऽपि विभ्राजया,
लक्ष्मीर्वा पुरुषोत्तमप्रियतमा नानार्थजातप्रसूः ।
गौरी मङ्गलशालिभद्रचरिता सर्वप्रियं भावुका,
जीयाद्धर्मकुमारपण्डितमतिर्विस्तारिधर्मोन्नतिः ॥ ५६ ॥

Post-Colophonic: इति० सर्वार्थसिद्धिसम्प्राप्तवर्णनो नाम सप्तमः प्रस्तावः । ग्रं० १२२५ ।

Post-Colophonic संवत् १५०६ वर्षे मार्गशुदि १ शनौ भाडापलीवासि हुंबडज्ञातीय । साहु । देवशाहेन श्रीशालिभद्रचरित्रं । लेखितं चिरं नन्यात् । मंत्रिचाम्पाकेन लिखितम् । कल्याणमस्तु । श्री ।

[ In a different hand writing ]

जिनातिशयपक्षाक्षवच्छ(त्स)रे विहिता कथा ।
ग्रन्थेन द्वादशशती चतुर्विंशतिसंयुता ॥ १ ॥ श्री

## 2792. हरिश्चन्द्रकथा

The Ms. Contains Following Kathās

### १. विनयोपरि विक्रमनृपकथा

OPENING:

गुरूणां विनतंभव्यं कर्त्तव्या साधुसङ्गतिः ।
सविवेकं मनो धार्यं न त्याज्यं सत्वमुत्तमम् ॥ १ ॥

विनयश्च विवेकश्च सुसङ्गश्च सुसत्वता ।
लौकिका अप्यमी श्लाघ्या गुणा लोकोत्तरास्त्वलम् ॥ २ ॥

तथाहि—

विनयादेव सौभाग्यं भाग्यं विद्यार्थसम्पदः ॥
लोकद्वयसुखस्यापि भाजनं विनयाद् नरः ॥ ३ ॥

× × ×

श्रूयते विनये याऽद्य विक्रमस्य कथा किल ।
लोकाप्रपविनयस्याङ्गमिति सैव निगद्यते ॥ ७ ॥

CLOSING:
(f. 8)

इति तं विक्रमो मुक्त्वा देव्या कमलया युतः ।
राज्यं चक्रे भद्रकात्मा धर्मकर्मपरायणः ॥ २२७ ॥
इत्येवं विनयादाप्ता विद्या निर्वाहसुन्दरा ।
अभूत् सैवाविनीतस्य महानर्थविधायिनी ॥ २२८ ॥

### २. विवेकोपरि सुमतिकथा

OPENING:
(f. 8)

इयता विनयः प्रोक्तो विवेकः कथ्यतेऽधुना ।
यं विना शोभते न श्रीः रूपं चक्षुर्विना यथा ॥ २२९ ॥

× × ×

विवेको गुरुवत्सर्वं कृत्याकृत्यं प्रकाशयेत् ।
सम्मिश्रवदकृत्याच्च वारयेत् सुमतिर्यथा ॥ २२४ ॥

CLOSING:
(f. 11)

इत्येवं सद्विवेकेन व्यस्तदोषः सतां मतः ।
क्रमात् सद्धर्ममासाद्य सुमतिः सुगतिं ययौ ॥ ३२२ ॥

## ३. सुसंसर्गोपरि प्रभाकरकथा

OPENING
(f. 11)

सुसंसर्गस्य माहात्म्यमद्भुतं कथ्यतेऽधुना ।
प्रायो जगति येन स्यादपि दैविकमन्यथा ॥ ३२३ ॥

आस्तामौपाधिको दोषः सहजोपि सुसंगतः ।
अपयाति यथा कर्म जीवस्य ज्ञानसङ्गमात् ॥ ३२४ ॥

पश्य सत्सङ्गमाहात्म्यं स्पर्शपाषाणयोगतः ।
लोहं स्वर्णीभवेत् स्वर्णयोगात् काचो मणीयते ॥ ३२५ ॥

विकाराय भवत्येव कुलजोपि कुसङ्गतः ।
जलजातोपि दाहाय शंखो वह्निनिषेवनात् ॥ ३२६ ॥

आस्तां सुचेतमां सङ्गात् सदसत् स्यात्तरोरपि ।
अशोकः शोकनाशाय कलये तु कलिद्रुमः ॥ ३२७ ॥

निःस्वोपि सङ्गतः साधुर्वरमृद्धोपि नाधमः ।
अश्वः कृशोपि शोभायै पुष्टोपि न पुनः खरः ॥ ३२८ ॥

एकमातृपितृत्वेपि श्रूयते शुकयोर्द्वयोः ।
भिल्लानां च मुनीनां च सङ्गाद्दोषगुणोदयः ॥ ३२९ ॥

सुसङ्गस्योपदेशोऽपि लभ्यते न यथा तथा ।
इत्यर्थे लोकविख्याता प्रभाकरकथोच्यते ॥ ३३० ॥

X X X X X X X X X X X

(f. 13)

विपन्ने राज्ञि कालेऽथ राजाभूद् गुणसुन्दरः ।
प्रभाकरः पुनर्मन्त्री सर्वकार्येषु यत्कृती ॥ ३९८ ॥

अन्यदा शाश्वतस्तस्य प्रजा नीत्या प्रजापतेः ।
ढौकनीयकृतौ हेढा चित्तंजात्यतुरंगमौ ॥ ३९९ ॥

सल्लक्षणधरौ किन्तु वैपरीत्येन शिक्षितौ ।
तत्स्वरूपमजानानस्तावपर्याणयन्नृपः ॥ ४०० ॥

एकस्मिन् स्वयमारूढो द्वितीयेऽमात्यमादिशत् ।
जग्मतुः सपरीवारौ शनकैस्तौ पुराद्बहिः ॥ ४०१ ॥

वाहयित्वा चिरं वाहौ वाह्यालीं वेगमीक्षितुम् ।
कशाघातं नृपामात्यौ कर्कशं चक्रतुस्तयोः ॥ ४०२ ॥

सहसोत्प्लुत्य तौ तस्मादविवष्टौ कपी इव ।
प्रवृत्तौ वेगतो गन्तुं प्रमातुमिव मेदिनीम् ॥ ४०३ ॥

वातयातद्रुतं मत्वाः क्षीघ्रं धावन्त सादिनः ।
दिव्येनेवैव केनापि हयेन ह्रियते नृपः ॥ ४०५ ॥

पुरस्कुर्वतो जनस्यैवं धावतामपि सादिनाम् ॥ ४०५ ॥
पापाक्षिमिरिवाहृष्टः सामात्योऽभूनृपः क्षणात् ।
यथा यथा नृपामात्यौ वल्गामाकर्षतो हठात् ।
तथा तथा चटद्वारं गच्छतस्तौ तुरङ्गमौ ॥ ४०६ ॥
सम्प्राप्तयोर्महाटव्यामामलक्यास्तरोरधः ।
गच्छतैव करेणात्तं मंत्रिणाऽऽमलकत्रयम् ॥ ४०७ ॥
प्रतिदूरं गतौ यावद् विलक्ष्यीभूय तौ श्रमात् ।
वल्गां मुमुचतुस्तावदश्वौ तत्रैव संस्थितौ ॥ ४०८ ॥
उत्तीर्णौ च नृपामात्यौ प्राणैर्मुक्तौ च वाजिनौ ।
किमेताभ्यां निजस्वामिद्रोहकाभ्यामितीव तौ ॥ ४०९ ॥
तयोः खेदं क्षणं धृत्वा परदुःखासुखी नृपः ।
क्षुत्तृष्णापीडितो वाढं मनस्येवं व्यभावयत् ॥ ४१० ॥
पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैःपलखण्डेषु रत्नसंज्ञा प्रकीर्तिता ॥ ४११ ॥
ध्रुवं सत्यमिदं वाक्यं यत्पर्याप्ते तनौ च मे ।
सत्स्वप्येतेषु रत्नेषु तृष्णा शाम्यति नाधुना ॥ ४१२ ॥
उवाच च महामात्यं तृषा यान्ति ममाऽसवः ।
मन्त्र्युवाचाऽऽकुलो देव मा भू रक्षामि ते तृषम् ॥ ४१४ ॥
एकमामलकं मंत्री ददौ त्रिभ्यो महीभुजे ।
निवृत्तात्मा तदाहारात् तस्थौ स्वस्थः क्षणं नृपः ॥ ४१४ ॥

× × × × × × × × × × ×

CLOSING : (f. 16)

तौ भूपसचिवौ राज्यं मुक्त्वा सत्संगतत्परौ ।
सद्गुरोर्धर्ममासाद्य हितोद्युक्तौ बभूवतुः ॥ ४५५ ॥
सुसङ्गस्यैव माहात्म्यं व्यवहारेण कीर्त्तितम् ।
सर्वार्थसिद्धिकृत्सत्त्वविषयं वर्ण्यतेऽधुना ॥ ४५६ ॥

## ४. सत्त्वोपरि हरिश्चन्द्रकथा

OPENING : (f. 16)

सत्त्वमेव नृणां तत्त्वं सत्त्वं सिद्धयै भवद्वये ।
विना सत्त्वं सजीवोऽपि निर्जीव इति कथ्यते ॥ ४५७ ॥
विक्षीर्णोऽपि यथा वृक्षः सति मूले प्ररोहति ।
प्रक्षीणोऽपि तथा भूयो नरः सत्त्वाद् विवर्द्धते ॥ ४५८ ॥
यद्दूरं यद्दुराराधं दुर्घटं दुर्लभं च यत् ।
सर्वं सिद्ध्यति तत्सत्त्वात् तद्विना तु सदप्यसत् ॥ ४५९ ॥

श्रूयते हि पुरा लोके श्रीमदिक्ष्वाकुवंशभूः ।
उदारचरितः सत्ये हरिश्चन्द्रो महानृपः ॥ ४६० ॥

विनयः सुव्रताचारे गुरौ सद्धर्मदेशके ।
शुश्रूषा प्रणतिश्चाज्ञामाननं मृदुभाषणम् ॥ ६३४ ॥

CLOSING :

विवेको देवपूजादौ मनोवाक्कायशोधनम् ।
सुसङ्गस्त्वेष यो धर्ममित्रेण सह संगमः ॥ ६३५ ॥

सुसत्वं च जिनाख्याततत्वश्रद्धाननिश्चयः ।
लोकोत्तरगुणैरेव भवेल्लोकोत्तरं सुखम् ॥ ६३६ ॥

COLOPHON : इति हरिश्चन्द्रचरितं । श्रीभावदेवाचार्यविरचितश्रीपार्श्वनाथचरित्रात् । ग्रन्थाग्र ।

---